॥ ओ३म् ॥

गुरुकुलग्रन्थावली ।

# आख्यातिकः

हरिद्वार निकटवर्ति भागीरथीतट विराजित
गुरुकुल विद्यालय-मुख्याधिष्ठातृ श्रीम-
न्मुन्शीराममहोदयनिदेशेन गुरुकुलस्थैः
श्री० पं० गङ्गादत्त शास्त्रिप्रमुखैः
पण्डितैः सङ्कलितः ।

तैरेवोपयुक्तस्थलटिप्पणीदानेन
विभूषितः, संशोधितश्च ।

जलन्धरीय
सद्धर्म्मप्रचारक यन्त्रालये
पं० अनन्तरामशर्म प्रबन्धेन
मुद्रितः

सं० १९६३ वि०

प्रथम वारम् १२००

अस्य पुनर्मुद्रणाद्यधिकारः
स्वायत्तः ॥

मूल्यम् ॥।)

स्वामि ... देवस्य
६।३।२०१ दयानन्दाब्दः
स्थान लाला आर्यसमाज मन्दिर
जि० मेरठ यू० पी०



ओ३म्

# भूमिका ।

ओ३म् अथ प्रकाश्यतेऽयमाख्यातिकनामा ग्रन्थः । इमं हरिद्वारनिकटवर्त्तिगुरुकुलमुख्याधिष्ठातृभिर्नियुक्ताः कतिचन विद्वांसः सङ्कलयाञ्चक्रुः । तिङन्तापरपर्यायमाख्यातमिति । तस्य व्याख्यानो ग्रन्थः "आख्यातिकः" इत्युच्यते । वेदाङ्गस्य पाणिनीयव्याकरणस्य चत्वारि शृङ्गाणि—चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्चेत्याद्युक्तं पस्पशाह्निके । तत्र नामपदाभिधेयसुबन्तविज्ञानं कृदन्तत्वादिना प्रातिपदिकत्वज्ञानेन सम्पद्यते । तिङन्तशब्दरूपाणां तत्त्वेन ज्ञानन्तु "आख्यातिक" पठनमन्तरा न साधुतया सम्भवतीति ज्ञायत एव विज्ञैः । परमार्थतस्त्वस्य बहुत्र सुबन्ततिङन्तेषूपयोगः । यतो धातुमूलिकैव शब्दशास्त्रप्रवृत्तिः, नहि कृदन्तत्वादिज्ञानमपि धातुविज्ञानमपहायेति । अतएव "धात्वर्थसमुपादिष्ट" मिति नन्दिकेश्वरकृतकाशिकाश्लोकपादव्याख्यानावसरे "धात्वर्थ"मिति प्रतीकमुपादाय धातुमूलकशब्दशास्त्रप्रवृत्यर्थमित्याहुर्नागेशभट्टाः । कालापचान्द्रादिव्याकरणानां लौकिकशब्दसाधुत्वान्वाख्यानमात्रपरत्वेऽपि वैदिकशब्दानामपि साधुत्वबोधकत्वेन पाणिनीयव्याकरणस्यैव वेदाङ्गत्वमित्यपरोक्षं विदुषां, परन्त्विदानींतनाः केचन वैदिकशब्द-

---

(१) अव्युत्पन्नान्यपि प्रातिपदिकानीति वैयाकरणसिद्धान्तात् "सर्वत्रे ति" नोक्तम्।

(२) अतएव "वृद्धिरादैच्" इति सूत्रे भाष्ये "छन्दोवत्सूत्राणि भवन्ति" इत्युक्तम् । तत्र "न वैशेषिकसूत्राण्यपि त्वङ्गत्वाद् (वेदाङ्गत्वाद्) व्याकरणसूत्राण्येव । इष्टिश्चेयं छन्दोवदि" तीत्याह कैयटः । तत्र छन्दः सदृशत्वन्तु वेदवत्प्रामाण्यस्वीकारेण बोध्यम् । पौरुषेयापौरुषेयत्वेन च वेदवेदाङ्गयोर्भेदः । अतएव "वेदाङ्गप्रकाश" नाम्नाऽऽख्यातिकादिग्रन्थजातं व्यरचयन् श्री० स्वामिदयानन्दाः ।

समूहप्रतिपत्त्यै प्रकृतिप्रत्ययविज्ञानस्यानावश्यकतामिव मन्यमा-
नास्तत्रोदासीनतां भजन्तइति महच्चित्रम्। वैयाकरणधौरेयैःश्री-
मद्भिर्भट्टोजिदीक्षितैः स्वसिद्धान्तकौमुदीग्रन्थे पृथगेव वैदिकप्रक्रिया
स्थापितेत्यशोभनं सहैव लौकिकवैदिकशब्दजिज्ञासूनामापतेदि-
त्यादिमन्वानैः श्री१०८ मद्दयानन्दसरस्वतीस्वामिभिः पृथगाका-
रेणाऽऽर्यभाषासंकलिततयाऽऽख्यातिकग्रन्थो व्यरचि। तस्य, मा-
धवाचार्य्यकृत "धातुवृत्ति" ग्रन्थस्य चाऽऽकारेण बृहत्तया, भाषास-
्खलितत्व,विस्तृतत्वादिदोषेण च गुरुकुलस्थछात्रादीनामावृत्तावनु-
पयोगितयोपयुक्तटिप्पणीदानादिपुरःसरं पार्थक्येनैव मुद्रापितोऽ-
यमुक्तपण्डितैः। सन्नन्तादिप्रक्रियानिवेशश्चाष्टाध्याय्यां कृतश्रमाणा-
मनावश्यकप्रायइति न कृतः। यथामति संशोधितेऽप्येतस्मिन् मद्-
दृष्टिदोषात्सीसकाक्षरयोजकादिदोषाद्वाऽऽपतिता अशुद्धीः 'गच्छ-
तस्खलनं क्वापी' तिन्यायेन क्षाम्यन्तु सुजना इति निवेदयति—

विद्वदनुचरः—

संशोधकः।






# आख्यातिकः।

(१) भू सत्तायाम्।

भूवादयो धातवः। १। ३। १।

क्रियावाचिनो भ्वादयो धातुसंज्ञाः।

धातोः। ३। १। ९१॥



अधिकारोऽयम्।

वर्त्तमाने लट्॥ ३। २। १२३॥

वर्त्तमाने धातोर्लट्।

लः कर्म्मणि च भावे चाकर्मकेभ्यः॥ ३। ४। ६९॥

लकाराः सकर्मकेभ्यो धातुभ्यः कर्माणि कर्तरि च, अकर्मकेभ्यो भावे कर्तारि च। अटावितौ। उच्चारणसामर्थ्याल्लस्य नेत्त्वम्, कर्तृविवक्षायां भू ल् इति स्थिते।

---

[१] आत्मधारणानुकूलो व्यापारस्सत्ता।

[२] वर्तमानकालक्रियावृत्तेरित्यर्थः। वर्तमानत्वं प्रारब्धापरिसमाप्तक्रियाश्रयत्वम् कालगतं बोध्यम्।

[३] कर्तरि कृत् इत्यस्मात् 'कर्त्तरि' इत्यनुवर्तणीयं चकारद्वयेन।

[४] कर्मणः कर्त्रधीनत्वनादौ कर्तरि।

लस्य ॥ ३ । ४ । ७७ ॥

अधिकारोऽयम् ।

तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्-
वहिमहिङ् ॥ ३ । ४ । ७८ ॥

एतेऽष्टादश लादेशाः ।

लः परस्मैपदम् ॥ १ । ४ । ९९ ॥

लादेशाः परस्मैपदसंज्ञकाः ।

तङानावात्मनेपदम् ॥ १ । ४ । १०० ॥

लादेशौ तङानावात्मनेपदसंज्ञौ । आनेति शानच्-कानचो-र्ग्रहणम् । त्यक्तानुबन्धत्वात् ।

अनुदात्तङित आत्मनेपदम् ॥ १ । ३ । १२ ॥

अनुदात्तेत उपदेशे यो ङित्तदन्ताच्च धातोर्लस्यात्मनेपदम् ।

शेषात्कर्तरि परस्मैपदम् ॥ १ । ३ । ७८ ॥

आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदम् ।

तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः ॥ १ । ४ । १०१ ॥

तिङस्त्रीणि त्रीणि क्रमशः प्रथमादिसंज्ञानि ।

(१) युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ।१।४।१०५॥

(१) उपोच्चारितम् पदमुपपदम् न तु कृत्रिमं तस्येहाप्राप्तेः ।

लकारवाच्यकारकवाचिनि युष्मदि अप्रयुज्यमाने प्रयुज्यमाने च मध्यमः ॥

अस्मद्युत्तमः ॥ १ । ४ । १०७ ॥

लकारवाच्यकारकवाचिनि अस्मदि अप्रयुज्यमाने प्रयुज्यमाने चोत्तमः।

शेषे प्रथमः ॥ १ । ४ । १०८ ॥

मध्यमोत्तमयोरविषये प्रथमः।

तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ १ । ४ । १०२ ॥

लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादिसंज्ञानि। तत्रैकत्वविवक्षायां, भू तिप्, एवं द्वित्वादिषु।

तिङ्शित्सार्वधातुकम् ॥ ३ । ४ । ११३ ॥

तिङः शितश्च धात्वधिकारोक्ताः सार्वधातुकसंज्ञाः।

(१)कर्तरि शप् ॥ ३ । १ । ६८ ॥

कर्तृवाचिनि सार्वधातुके परे धातोः शप्। शपावितौ। भू-अ-ति।

सार्वधातुकार्द्धधातुकयोः ॥ ७ । ३ । ८४ ॥

अनयोरिगन्तस्याङ्गस्य गुणः। अवादेशः। भवति। भवतः।

झोऽन्तः ॥ ७ । १ । ३ ॥

प्रत्ययादेर्झस्यान्तादेशः। अतो गुणे। भवन्ति। भवसि। भवथः। भवथ।

अतो दीर्घो यञि ॥ ७ ॥ ३ । १०१ ॥

अदन्ताङ्गस्य दीर्घो यञादौ सार्वधातुके। भवामि। भवावः।

(१)-ननु भावकर्मणोर्यग् विधानात्.त्तं.ति व्यर्थमिति चेन्न। उत्तरार्थत्वात्। अन्यथा अपवाद। विप्रतिषेधेन भावकर्मणोरपि दिवादिभ्यः श्यन् स्यात्।

भवामः। स भवति। तौ भवतः। ते भवन्ति। त्वं भवसि। युवां भवथः। यूयं भवथ। अहं भवामि। आवां भवावः। वयं भवामः।

(१) परोक्षे लिट् ॥ ३।२।११५ ॥

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट्। लस्य तिबादयः।

लिट् च ॥ ३।४।११५ ॥

लिडादेशस्तिङार्द्धधातुकसंज्ञक एव न तु सार्वधातुकसंज्ञः। तेन शबादयो न।

परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ३।४।८२ ॥

लिटस्तिबादीनां नवानां णलादयो नव। भू अ इति स्थिते।

भुवो वुग् लुङ्लिटोः ॥ ६।४।८८ ॥

भुवो वुगागमोऽजादौ लुङि लिटि च। नित्यो वुक् वृद्धिं बाधते। कृताकृतप्रसङ्गि नित्यम्

एकाचो द्वे प्रथमस्य ॥ ६।१।१ ॥

अजादेर्द्वितीयस्य ॥ ६।१।२ ॥

इत्यधिकृत्य।

लिटि धातोरनभ्यासस्य ६।१।८ ॥

लिटि परेऽनभ्यासधात्ववयवस्य प्रथमस्यैकाचो द्विर्वचनमादिभूतादचस्तु द्वितीयस्य।

---

(१)-परोक्षत्वञ्च साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वम्।

(२)-भूतत्वं वर्तमानध्वंसप्रतियोगिसमयवृत्तित्वम्।

(३)-अतीतरात्रेरन्त्ययामेनागामिन्याः पूर्वयामेन च सहितः कालोऽद्यतनस्तद्भिन्नोऽनद्यतनः।

पूर्वोऽभ्यासः ॥ ६ । १ । ४ ॥

द्विरुक्तस्य पूर्वोऽभ्यासः ।

(१) हलादिः शेषः ॥ ७ । ४ । ६० ॥

अभ्यासस्यादिर्हल् शिष्यतेऽनादिस्तु निवर्तते । इति वलोपः ।

ह्रस्वः ॥ ७ । ४ । ५९ ॥

अभ्यासस्याचो ह्रस्वः ।

भवतेरः ॥ ७ । ४ । ७३ ॥

भवतेरभ्यासान्तस्याकाराऽऽदेशो लिटि ।

अभ्यासे चर्च ॥ ८ । ४ । ५४ ॥

अभ्यासे झलां चरो जशश्च । तत्राऽऽन्तरतम्याद् झशां जशः खयाञ्चर इति विवेकः । बभूव । भू–अतुस् ।

असिद्धवदत्राभात् ॥ ६ । ४ । २२ ॥

इत ऊर्ध्वमापादपरिसमाप्तेराभीयं समानाश्रये तस्मिन्कर्तव्ये तदसिद्धम् । इति वुकोऽसिद्धत्वादुवङि प्राप्ते (वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ) । बभूवतुः । बभूवुः । भू–थ ।

आर्धधातुकस्येड्वलादेः ॥ ७ । २ । ३५ ॥

वलादेरार्धधातुकस्येट् । भू इ थ । अत्र वुक् परत्वाद्गुणे प्राप्ते एवमुत्तमे णलि णित्वाभावपक्षेऽपि ।

(१)–संहितापाठेऽहलिति विच्छिद्य, अभ्यासस्य:हल् ,ततः, आदिश्शेषः, आदिर्हल् चेत् शिष्येत, इति व्याख्यान्तरम् । तेन आट, आटतुरित्यादौ न दोषः ।

(१) इन्धिभवतिभ्यां च ॥ १ । २ । ६ ॥

आभ्यां परो लिट् कित्।

क्ङिति च ॥ १ । १ । ५ ॥

गित्किन्ङिन्निमित्ते इको गुणवृद्धी न। बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम।

अनद्यतने लुट् ॥ ३ । ३ । १५ ॥

अनद्यतनभविष्यदर्थाद्धातोर्लुट्।

स्यतासी लृलुटोः ॥ ३ । १ । ३३ ॥

धातोर्यथासङ्ख्यं स्यतासी लृलुटोः। लृ इति लृट्लृङोर्ग्रहणम्। शबाद्यपवादः

आर्द्धधातुकं शेषः ॥ ३ । ४ । ११४ ॥

तिङ्शिद्भ्योऽन्यो धातोर्विहितः प्रत्यय आर्द्धधातुकसंज्ञः। इट्।

लुटः प्रथमस्य डारौरसः ॥ २ । ४ । ८५ ॥

लुडादेशस्य प्रथमस्य डारौरसः। डित्वसामर्थ्यादभस्यापि टेर्लोपः।

पुगन्तलघूपधस्य च ॥ ३ । ७ । ८६ ॥

पुगन्तस्य लघूपधस्याश्च गुणः सार्वधातुकार्द्धधातुकयोः। भवित्=आ, अत्रेको गुणे प्राप्ते।

---

(१)-एतत्सूत्रं तु प्रत्याख्यातमेवाकरे। तथाच वार्तिकम्-इन्धेश्छन्दोविषयत्वाद्। भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम्।

(२)-सर्वादेशत्वन्त्वनुबन्धान्तरेणापि सुवचमिति।

दीधीवेवीटाम् ॥ १।१।६ ॥

दीधीवेव्योरिटश्च गुणवृद्धी न। भविता।

रि च ॥ ७।४।५१ ॥

रेफादौ प्रत्यये तासस्त्योस्सकारस्य लोपः। भवितारौ। भवितारः।

तासस्त्योर्लोपः ॥ ७।४।५० ॥ अस्ति= धातोः सकारले

अनयोः सस्य लोपः सादौ प्रत्यये। भवितासि। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः।

लृट् शेषे च ॥ ३।३।१३ ॥

भविष्यदर्थाद्धातोर्लृट् क्रियार्थायां क्रियायां सत्यामसत्याञ्च। स्ये, इट्, षत्वे च। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। दीर्घ—भविष्यामि। भविष्यावः। भविष्यामः।

लिङर्थे लेट् ॥ ३।४।७ ॥

छन्दसि लिङर्थे लेट्।

सिब्बहुलं लेटि ॥ ३।१।३४ ॥

लेटि धातोः सिब्बहुलम्। आर्द्धधातुकत्वादिटि, भू इस् ति। (सिब्बहुलं णिद्वक्तव्यः) वृद्धावावादेशे षत्वे च, भाविष् ति

आडागमस्य पित्त्वेति पित् लेटोऽडाटौ ॥ ३।४।९४ ॥

लेटोऽडाटावागमौ तौ च पित्संज्ञकौ। भाविषति। भाविषाति।

इतश्च लोपः परस्मैपदेषु ॥ ३ । ४ । ९७ ॥

लेट्सम्बन्धिनः परस्मैपदे इकारस्य लोपो वा । भाविषद् ( त् ) भाविषाद् ( त् ) णित्वाभावपक्षे । भविषति । भविषाति । भविषद् ( त् ) भविषाद् ( त् ) पक्षे शप् । भवति । भवाति । भवद् ( त् ) भवाद् ( त् ) भाविषतः । भाविषातः । भविषतः । भविषातः । भवतः । भवातः । भाविषन्ति । भाविषान्ति । भाविषन् भाविषान् । भविषन्ति । भविषान्ति । भविषन् । भविषान् । भवन्ति । भवान्ति । भवन् । भवान् । भाविषसि । भाविषासि । भाविषः । भाविषाः । भविषसि । भविषासि । भाविषः । भाविषाः भवसि । भवासि । भवः । भवाः । भाविषथः । भाविषाथः । भविषथः । भविषाथः । भवथः । भवाथः । भाविषथ । भाविषाथ । भविषथ । भाविषाथ । भवथ । भवाथ । मिपि । भाविषमि । भाविषामि । भाविषम् । भाविषाम् । भविषमि । भविषामि । भविषम् । भविषाम् । भवमि । भवामि । भवम् । भवाम् ।

स उत्तमस्य ॥ ३ । ४ । ९८ ॥

लेट्सम्बन्धिन उत्तमस्य सस्य वा लोपः । भाविषव । भाविषाव । भाविषवः । भाविषावः । भविषव । भविषाव । भविषवः । भविषावः । भववः । भवावः । भवव । भवाव । भाविषम । भाविषाम भाविषमः । भाविषामः । भविषम । भविषाम । भविषमः । भविषामः । भवम । भवाम । भवमः । भवामः ।

लोट् च ॥ ३ । ३ । १६२ ॥

विध्यादिष्वर्थेषु धातोर्लोट् ।

आशिषि लिङ्लोटौ । ३ । ३ । १७३ ॥

एरुः ॥ ३ । ४ । ८६ ॥

लोडादेशस्येकारस्योकारः । भवतु ।

तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ॥ ७ । १ । ३५ ॥

आशिषि तुह्योस्तातङ् वा । भवतात् । अनेकाल्त्वात्सर्वादेशः (२) विप्रतिषेधे परं कार्यम् इति शेषः

(१)लोटो लङ्वत् ॥ ३ । ४ । ८५ ॥

लोटो लङ इव कार्यम् । तेन तामादयस्सलोपश्च ।

तस्थस्थमिपां तान्तन्तामः ॥ ३ । ४ । १०१ ॥

ङितश्चतुर्णां क्रमात्तामादयः । भवताम् । भवन्तु ।

सेर्ह्यपिच्च ॥ ३ । ४ । ८७ ॥

लोटः सेर्हिः सोऽपिच्च ।

अतो हेः ॥ ६ । ४ । १०५ ॥

अतः परस्य हेर्लुक् । भव । भवतात् । भवतम् । भवत ।

मेर्निः ॥ ३ । ४ । ८९ ॥

लोटो मेर्निः ॥

आडुत्तमस्य पिच्च ॥ ३ । ४ । ९२ ॥

लोडुत्तमस्याऽऽट् स पित् । हिन्योरुत्वन्न, इकारोच्चारणसामर्थ्यात् । भवानि । हि तावत् जहि, देहि, धेहि

(१) षष्ठ्यन्तात्वतिः ।

(२) लुगपेक्षया परत्वाद्धेस्तातङ्, अन्तरङ्गानपीति न्यायस्तु ज्ञापकसिद्धत्वादनित्य इति शब्देन्दुशेखरे । अन्तरङ्गमेव लुक् बाधते न तु परमिति वा ।

नित्यं ङितः ॥ ३ । ४ । ९९ ॥

सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः । भवाव । भवाम ।

अनद्यतने लङ् ॥ ३ । २ । १११ ॥

अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् ।

लुङ्लङ्लृङ्क्ष्वडुदात्तः ॥ ६ । ४ । ७१ ॥

एष्वङ्गस्याट् स चोदात्तः ।

इतश्च ॥ ३ । ४ । ६ ॥

ङितो लस्य परस्मैपदमिकारान्तं यत्तस्य लोपः । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ।

विधिनिमन्त्रणाऽऽमन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ॥ ३।३।१६१ ॥

विधिः प्रेरणम्, भृत्यादेः कस्याञ्चित्क्रियायां नियोजनम् । निमन्त्रणम्–नित्यनैमित्तिककर्मविषया प्रवर्तना । आमन्त्रणं काम्यकर्मविषया सा । अधीष्टः-सत्कारपूर्विका सर्वकर्मविषया । सम्प्रश्नः–सम्प्रधारणम् । प्रार्थनं-याचनम् । एष्वर्थेषु धातोर्लिङ् । भव-तिप् ।

यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ ३ । ४ । १०३ ॥

लिङः परस्मैपदानां यासुट् स चोदात्तो ङिच्च ।

सुट् तिथोः ॥ ३ । ४ । १०७ ॥

लिङ्सम्बन्धिनोस्तकारथकारयोः सुट् । ( १ )

( १ )–सुटा यासुट् न बाध्यते लिङो यासुट तकारथकारयोः सुडिति विषयभेदात् ।

लिङः सलोपोऽनन्त्यस्य ॥ ७ । २ । ७९ ॥

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः । इति प्राप्ते-

(१) अतो येयः ॥ ७ । २ । ८० ॥

अदन्तादङ्गात्परस्य यास् इत्यस्येयादेशः । गुणः । लोपो व्योर्वलि । भवेत् । भवेताम् ।

झेर्जुस् ॥ ३ । ४ । १०८ ॥

लिङो झेर्जुस् । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ।

लिङाशिषि ॥ ३ । ४ । ११६ ॥

आशिषि लिङ्स्तिङार्धधातुकसंज्ञः ।

किदाशिषि ॥ ३ । ४ । १०४ ॥

आशिषि लिङो यासुट् कित् । कित्त्वाद्गुणो न । विशेषफलन्तु उच्चारादित्यादि । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ।

लुङ् ॥ ३ । २ । ११० ॥

भूतार्थवृत्तेर्धातोर्लुङ् ।

माङिलुङ् ॥ ३ । ३ । १७५ ॥

माङ्युपपदे धातोर्लुङ् । सर्वलकारापवादः ।

(१)-येय इत्यत्र तु सन्धिरार्षः। लिङः सलोपोऽनन्त्यस्येत्यस्यापवादोऽयं योगः। एतच्च विप्रतिषेधसूत्रे भाष्ये।

स्मोत्तरे लङ् च ॥ ३ । ३ । १७६ ॥

स्मोत्तरे माङि लङ् चाल्लुङ् ।

च्लि लुङि ॥ ३ । १ । ४३ ॥

शबाद्यपवादः ।

च्लेः सिच् ॥ ३ । १ । ४४ ॥

च्लेः सिजादेशः ।

गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ २ । ४ । ७७ ॥

एभ्यः सिचो लुक् । प्रत्ययलक्षणेन सिचः सत्वात् ।

(१) अस्तिसिचोऽपृक्ते ॥ ७ । ३ । ९६ ॥

अस्तेः सिचश्च परस्यापृक्तस्य हलादेः पितः सार्वधातुकस्य ईट् । ( आडिभुवोरीट्प्रतिषेधः )

भूसुवोस्तिङि ॥ ७ । ३ । ८८ ॥

भू सू एतयोःसार्वधातुके तिङि परे गुणो न । अभूत् । अभूताम् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ।

न माङ्योगे ॥ ६ । ४ । ७४ ॥

माङ्योगेऽडाटौ न । मा भवान्भूत् । मा स्म भवत् । मा स्म भवान्भूत् ।

---

(१)–सिच्--अस्‌चेतिसमाहारद्वन्द्वे अस्तीत्यव्ययेन कर्मधारये च विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्यहल ईडागम इत्यर्थं तेन नेह-सिचोलुप्तत्वादिति केचित् । भाष्यकारास्त्वाहुः । अस्ति सिचोऽपृक्ते इति द्विसकारकोऽयं निर्देशः ।

(२)–"सिजभ्यस्तेति" झेर्जुस् न, "आत." इति नियमात् ।

लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ ३ । ३ । १३९ ॥

हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम ।

एध वृद्धौ ।

टित आत्मनेपदानां टेरे ॥ ३ । ४ । ७९ ॥

टितो लस्यात्मनेपदानां टेरेत्वम् । एधते ।

सार्वधातुकमपित् ॥ १ । २ । ४ ॥

अपित्सार्वधातुकं ङिद्वत् ।

आतो ङितः ॥ ७ । २ । ८१ ॥

अदन्तादङ्गात्परस्य ङिदवयवस्याऽऽकारस्येयादेशः । एधेते । एधन्ते ।

थासः से ॥ ३ । ४ । ८० ॥

टितो लस्य थासः से । एधसे । एधेथे । एधध्वे । अतो गुणे । एधे । अतो दीर्घो यञि । एधावहे । एधामहे ।

इजादेश्च गुरुमतोऽनृच्छः ॥ ३ । १ । ३६ ॥

इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् लिटि । आमो मकारस्य नेत्वम् । आस्कासोराम्विधानाज्ज्ञापकात् ।

आमः ॥ २ । ४ । ८१ ॥

आमः परस्य लुक् ।

कृञ्चानुप्रयुज्यते लिटि ॥ ३ । १ । ४० ॥

आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते ।

स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥ १ । ३ । ७२ ॥

स्वरितेतो ञितश्च धातोरात्मनेपदं कर्तृगामिनि क्रियाफले । परगामिनि क्रियाफले तु कृञः परस्मैपदं प्राप्ते ।

(१) आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ॥ १ । ३ । ६३ ॥

आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदम् । कृ ते इति स्थिते ।

(२) लिटस्तझयोरेशिरेच् ॥ ३ । ४ । ८१ ॥

लिडादेशयोस्तझयोरेशिरेचौ ।

असंयोगाल्लिट् कित् ॥ १ । २ । ५ ॥

असंयोगात्परोऽपिल्लिट् कित् । क्ङिति चेति निषेधात्सार्वधातुकार्धधातुकयोरिति गुणो न । क्ङित्वात्परत्वाद्यणि प्राप्ते ।

(१) अत्र कृञ् । ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीति ज्ञायते । तेन "कृभ्वस्तियोग" इत्यतः "कृञो द्वितीये"ति प्रकारेण प्रत्याहाराश्रयणात् भ्वस्तिलाभः । सम्पदिस्तु तदन्तर्भूतोऽपि सामान्यविशेषरूपेणाभेदान्वयबोधनासम्भवान्न प्रयुज्यते । "पूर्ववत्सनः" इत्यतः पूर्ववदित्यनुवृत्य । यथा सदृशप्रत्ययवदिति वचनं ज्ञापकं पूर्ववदेवात्मनेपदं न तु तद्विपरीतमित्यस्य । तेन इन्दाञ्चकारेत्यादौ नात्मनेपदम् ।

(२) एकारोच्चारणेन ज्ञाप्यते, तङादेशानां टेरेत्वं न तेन डारौरसां न ।

द्विर्वचनेऽचि ॥ १ । १ । ५९ ॥

द्वित्वनिमित्तेऽचि परे अच आदेशो न द्वित्वे कर्तव्ये ।

उरत् ॥ ७ । ४ । ६६ ॥

अभ्यासऋवर्णस्याऽत् प्रत्यये । रपरत्वम् । हलादिशेषः । प्रत्यये किम् । वव्रश्च । अचः परस्मिन्पूर्वविधौ, स्थानिवत्वात् / न सम्प्रसारणे सम्प्रसारणम् । इति न

कुहोश्चुः ॥ ७ । ४ । ६२ ॥

अभ्यासकवर्गहकारयोश्चवर्गादेशः । एधाञ्चक्रे । एधाञ्चक्राते । एधाञ्चक्रिरे ।

एकाच उपदेशेऽनुदात्तात् ॥ ७ । २ । १० ॥

उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्धधातुकस्येट् न । एधाञ्चकृषे । एधाञ्चक्राथे ।

इणः षीध्वंलुङ्लिटान्धोऽङ्गात् ॥ ८ । ३ । ७८ ॥

इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटांधस्य मूर्धन्यः । एधाञ्चकृढ्वे । एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधांबभूव । असि विशेषः । अस्तेर्भूभावस्तु न अनुप्रयोगसामर्थ्यात् ।

अत आदेः ॥ ७ । ४ । ७० ॥

अभ्यासस्यादेरतो दीर्घः । पररूपापवादः । एधामास । एधामासतुः । एधामासुः । एधामासिथ । एधामासथुः । एधामास । एधामास । एधामासिव । एधामासिम । एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे ।

धि च ॥ ८ । २ । २५ ॥

धादौ प्रत्यये सलोपः । एधिताध्वे ।

ह एति ॥ ७ । ४ । ५२ ॥

तासस्त्योः सस्य ह एति परे । एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे ।

वैतोऽन्यत्र ॥ ३ । ४ । ९६ ॥

लेट एकारस्य ऐ वाऽऽत ऐ इत्यस्य विषयं विना । एधिषतै । एधिषातै । एधिषते । एधिषाते । शप्पक्षे । एधतै । एधातै । एधते । एधाते ।

आत ऐ ॥ ३ । ४ । ९५ ॥

लेट् आकारस्य ऐ । एधिषैते २ । एधैते २ । एधिषन्तै । एधिषान्तै । एधिषन्ते । एधिषान्ते

---

आदन्ताः । अदरिद्राः । इवर्णान्ताश्च श्रिश्विडीशीदीधीवेवीङः । उकारान्ताः । युरुणुक्ष्णुस्तूणु वर्जम् । ऋदन्ताश्च जागृवृङ् वृञः । शक्िः कवर्गान्तानाम् । पचिवचिविचिसिचिमुचिरिचिविचिशिचिप्रच्छित्यजिभजिभञ्जिभुजिभ्रस्जिमस्जियजियुजिरुजिरञ्जिनिजिविजिसञ्जिस्वञ्जयश्च चवर्गान्तानाम् । सदिशदिहदिच्छिदितुदिनुदिस्विदिभिदिस्कन्दिक्षुदिखिद्यतिविन्दतिविन्तिविद्यतिराधियुधिबुधिशुधिक्रुधिबधिसाधिव्यधिबन्धिसिध्यतिहनिमन्यतयस्तवर्गान्तानाम् । तिपितपिवपिशपिछुपिलुपिलिपिदृप्यापिक्षिपिसृपितृपिदृपियभिरभिलभियमिरमिनमिगमयः पवर्गान्तानाम् । रुशिरिशिदिशिविशिलिशिस्पृशिदृशिक्रुशिमृशिदंशित्विषिमृषिकृषिश्लिषि शिषिपिषितुषिदुषिद्विषिघसिवसिदहिदिहिवहिदुहिनहिरुहिवहिलिहिमिह यश्चोष्मान्तानाम् । वसिः प्रसारणी ।

एधिषान्ते । एधन्तै । एधान्तै । एधन्ते । एधान्ते । एधिषसै । एधिषासै । एधिषसे । एधिषासे । एधसै । एधासै । एधसे । एधासे । एधिषैथे २ । एधैथे २ । एधिषध्वै । एधिषाध्वै । एधिषध्वे । एधिषाध्वे । एधध्वै । एधाध्वै । एधध्वे । एधाध्वे । एधिषै २ । एधिषि २ । एधै २ । एधे २ । एधै । एधिषवहै । एधिषावहै । एधिषवहे । एधिषावहे । एधवहै । एधावहै । एधवहे । एधावहे । एधिषमहै । एधिषामहै । एधिषमहे । एधिषामहे । एधमहै । एधामहै । एधमहे । एधामहे । ६४

**आमेतः ॥ ३ । ४ । ९० ॥**

लोट एकारस्याम् । एधताम् । आतोङितः । एधेताम् । एधन्ताम् ।

**सवाभ्यां वामौ ॥ ३ । ४ । ९१ ॥**

सवाभ्यां परस्य लोडेतः क्रमाद्वामौ । एधस्व । एधेथाम् । एधध्वम् ।

**एत ऐ ॥ ३ । ४ । ९२ ॥**

लोडुत्तमस्य एत ऐ । आमोऽपवादः । एधै । एधावहै । एधामहै ।

**आडजादीनाम् ॥ ६ । ४ । ७२ ॥**

अजादीनामाट् लुङादिषु । आटश्चेति वृद्धिः । ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ।

**लिङः सीयुट् ॥ ३ । ४ । १०२ ॥**

सलोपः । एधेत । एधेयाताम् ।

**झस्य रन् ॥ ३ । ४ । १०५ ॥**

लिङो झस्य रन् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् ।

## इटोऽत् ॥ ३ । ४ । १०६ ॥

लिङादेशस्येटोऽत् । एधेय । एधेवहि । एधेमहि । सीयुट्, इट्, सुट्, यलोपः । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः एधिषीयास्थाम् । एधिषीध्वम् । एधिषीय । एधिषीवहि । एधिषीमहि । ऐधिष्ट । ऐधिषाताम् ।

## आत्मनेपदेष्वनतः ॥ ७ । १ । ५ ।

अनकारात्परस्यात्मनेपदेषु झस्याऽत् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । ऐधिढ्वम्(१) । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि ।

स्पर्द्ध संघर्षे, संघर्षः पराभिभवेच्छा । स्पर्द्धते ।

## शर्पूर्वाः खयः ॥ ७ । ४ । ६१ ॥

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते । पस्पर्द्धे । पस्पर्द्धाते इत्यादि । स्पर्द्धिता । स्पर्द्धिष्यते । स्पर्द्धताम् । अस्पर्द्धत । स्पर्द्धेत । स्पर्द्धिषीष्ट । अस्पर्द्धिष्ट । अस्पर्द्धिष्यत । गाधृ, प्रतिष्ठालिप्सयोर्ग्रन्थे च । बाधृ विलोडने । विलोडनं प्रतीघातः । नाधृ नाधृ याच्ञोपतापैश्वर्याशीःषु । ( आशिषि नाथ इति वाच्यम् ) अन्यत्र नाथति । दध धारणे । दधते ।

## अत एकहल्मध्येऽनादेशादेर्लिटि(२) ॥ ६ । ४ । १२० ॥

लिण्निमित्तादेशादिकं न यदङ्गं तदवयवस्यासंयुक्तहल्मध्य-

(१) इणःषीध्वमितिमूर्धन्यः । इड्भिन्न एव इणिह गृह्यते इतिमते तु ऐधिध्वम् ।

(२) लिटीत्यावर्त्य, आदेशविशेषणमेत्वस्य च निमित्तं क्रियते । तत्फलं-नेमिथेत्यादि ।

स्थस्याकारस्यैकारोऽभ्यासलोपश्च किति लिटि । देघे । देघाते । देघिरे । देघिषे । देघाथे । देघिध्वे । देघे । देघिवहे । देघिमहे । स्कुदि, आप्रवणे(१) ।

इदितो नुम्धातोः ॥ ७ । १ । ५८ ॥

इदितोधातोर्नुम् । स्कुन्दते । चुस्कुन्दे । स्कुन्दिता । स्कुन्दिष्यते । स्कुन्दताम् । अस्कुन्दत । स्कुन्देत । स्कुन्दिषीष्ट । अस्कुन्दिष्ट । अस्कुन्दिष्यत । श्विदि, श्वैत्ये । अकर्मकः । श्विन्दते । शिश्विन्दे । वदि, अभिवादनस्तुत्योः । वन्दते । ववन्दे । भदि, कल्याणे सुखेच । भन्दते । बभन्दे । मदि, स्तुति मोद मद स्वप्न कान्ति गतिषु । स्पदि, किञ्चिचलने । क्लिदि, परिदेवने । सकर्मकः । मुद, हर्षे । दद, दाने । ददते ।

(२) न शसददवादिगुणानाम् ॥ ६ । ४ । १२६ ॥

शसेर्ददेर्वकारादीनां गुणशब्देन भावितस्य योऽकारस्तस्य चैत्वाभ्यासलोपौ न । ददंदे । ददंदाते । ददंदिरे । ददिता । ददिष्यते । ददताम् । अददत । ददेत । ददिषीष्ट । अददिष्ट । अददिष्यत । ष्वद, स्वर्द, आस्वादने । आस्वादनमनुभवो रुचिश्च ।

धात्वादेः षः सः ॥ ६ । ४ । ६४ ॥

धातोरादेः षस्य सः । स्वदते । सस्वदे । स्वर्दते । सस्वर्दे । स्वदिता । स्वर्दिता । उर्द, माने क्रीडायाञ्च ।

(१) आप्रवणमुत्प्लवनमुद्धरणं चेत्येवमनिर्दिष्टधात्वर्था धातुपाठोपवृत्त्यां द्रष्टव्याः ।

(२) शसिदद्योः प्रतिषेधेन, एत्वाभ्यासलोपविधायकसूत्रे वैरूप्यसम्पादक एवादेश आश्रीयते, तेन प्रकृतिजश्चरां तेषु सत्स्वपि तत्प्रवर्तत एव ।

उपधायाञ्च ॥ ८ । २ । ७८ ॥

धातोरुपधाभूतयोरेफवकारयोर्हल्परयोः परत इको दीर्घः । ऊर्दते । ऊर्दाञ्चक्रे । ऊर्दिता । ऊर्दिष्यते । ऊर्दताम् । और्दत । और्दिष्ट । और्दिष्यत । कुर्द, खुर्द, गुर्द, गुद, क्रीडायामेव । कूर्दते । चुकूर्दे । गोदते । षूद, क्षरणे । सूदते । सुषूदे । सूदिता । सूदिष्यते । सेक्, सृप्, सृ, स्तृ, सृज, स्तॄ, स्त्यावर्ज्यं दन्त्याजन्तसादयः । एकाचः षोपदेशाः ष्वष्क्, स्विद, स्वद्, स्वञ्ज, स्वप् स्मिङः ॥१॥ दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपि । ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञापकात् ।

ह्राद, अव्यक्तेशब्दे । ह्रादते । जह्रादे । ह्रादिता । ह्लादी, सुखे च । स्वाद, आस्वादने । पर्द, कुत्सिते शब्दे, । यती, प्रयत्ने । येते । युत, जुत, भासने । योतते । युयुते । जोतते । जुजुते । विथृ, वेथृ, याचने । श्रथि, शैथिल्ये । ग्रथि, कौटिल्ये, । कत्थ, श्लाघायाम् । इत्येधादय उदात्ता उदात्तेत आत्मनेपदिनः षट्त्रिंशत् ।

अथाष्टत्रिंशत्तवर्गीयान्ताः परस्मैपदिनः । अत, सातत्यगमने । अतति, आत । अतआदेः । अतिता । अतिष्यति । अततु । आततु । अतेत् । अत्यात् । लुङि–आ-अत् । स्- ी-त् । इति स्थिते ।

इट ईटि ॥ ८ । २ । २८ ॥

इटः परस्य सस्य लोप ईटि परे । सलोपस्यासिद्धत्वाद्दीर्घेऽप्राप्ते । (सिज्लोप एकादेशे सिद्धो वक्तव्यः) आतीत् । आतिष्टाम् ।

सिजभ्यस्तविदिभ्यश्च ॥ ३ । ४ । १०९ ॥

सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस् । आतिषुः ।

आतीः। आतिष्टम्। आतिष्ट। आतिषम्। आतिष्व। आतिष्म।

वदव्रजहलन्तस्याचः॥ ७। २। ३॥

वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचो वृद्धिः परस्मैपदे सिचि। इति प्राप्ते।

नेटि॥ ७। २। ४॥

इडादौ सिचि हलन्तलक्षणा वृद्धिर्न। मा भवानतीत्। आतिष्यत्। चिती, संज्ञाने। चेतति। चिचेत। चिचिततुः। चिचितुः। चिचेतिथ। चिचितथुः। चिचित। चिचेत। चिचितिव। चिचितिम। च्युतिर्, आसेचने। (इर इत्संज्ञा वाच्या)(२)च्योतति। चुच्योत। च्योतिता।

इरितो वा॥ ३। १। ५७॥

इरितो धातोश्च्लेरङ्वा परस्मैपदेषु। अच्युतत्। अच्युतताम्। अच्युतन्। पक्षे, अच्योतीत्। अच्योतिष्टाम्। अच्योतिषुः। अच्योतिष्यत्। श्च्युतिर्, क्षरणे। श्च्योतति। चुश्च्योत। अश्च्युतत्। अश्च्योतीत्। मन्थ, विलोडने। मन्थति। ममन्थ। मन्थिता। मन्थिष्यति। मन्थतु। अमन्थत्। मन्थेत्। यासुटः कित्वादनिदितांहल- इति नलोपः। मथ्यात्। अमन्थीत्। अमन्थिष्यत्। कुथि, पुथि, लुथि, मथि, हिंसासंक्लेशनयोः। इदित्वान्नलोपो न। कुन्थ्यात्। मन्थ्यात्। षिध, गत्याम्। सेधति। सिषेध। सेधिता। सेधिष्यति। सिध्यात्। असेधीत्। असेधिष्यत्। षिधू, शास्त्रे माङ्गल्ये च। शास्त्रम्-शासनम्। सेधति। सिषेध। सिषिधतुः। सिषिधुः।

(१)-तदन्तविधिनैवसिद्धेऽन्तग्रहणं स्पष्टप्रतिपत्यर्थम्।

(२)-इकारस्य रेफस्य च प्रत्येकमित्संज्ञायामिदित इति नुम् प्रसङ्गः स्यात्।

स्वरतिसूतिसूयतिधूञूदितो वा ॥ ७ । २ । ४४ ॥

स्वरत्यादेरूदितश्च परस्य वलादेरार्द्धधातुकस्येड् वा ।

झषस्तथोर्धोऽधः ॥ ८ । २ । ४० ॥

झषः परयोस्तथयोर्धो न तु दधातेः । सिषेद्ध । सिषेधिथ । सिषिधथुः । सिषिध । सिषेध । सिषिधिव । सिषिधिम । सेद्धा । सेधिता । सेत्स्यति । ~~सेधिष्यति~~ । असैत्सीत् ।

झलो झलि ॥ ८ । २ । २६ ॥

झलः परस्य सस्य लोपो झलि । असैद्धाम् । असैत्सुः । असैत्सीः । असैद्धम् । असैद्ध । असैत्सम् । असैत्स्व । असैत्स्म । पक्षे । असेधीत् । असेधिष्टाम् । खाद्,भक्षणे । खादति । चखाद । खादिता । खादिष्यति । खादिषति । खादिषाति । खद(१), स्थैर्ये हिंसायाञ्च । चाद्भक्षणे । खदति । चखाद । चखदतुः । चखदुः । चखदिथ । चखदथुः । चखद ।

णलुत्तमो वा ॥ ७ । १ । ९१ ॥

उत्तमो णल्वा णित् । चखाद । चखद । खदिता । खदिष्यति । खदिषति । खदिषाति ।

अतो हलादेर्लघोः ॥ ७ । २ । ७ ॥

हलादेर्लघोरकारस्य वृद्धिर्वा इडादौ परस्मैपदे सिचि । अखा-

(१) स्थैर्ये त्वकर्मकः

दीत् । अखदीत् । अखदिष्यत् । बद(१), स्थैर्ये । बदति । बबाद । बेदतुः । बेदुः ।

## थलि च सेटि ॥ ६ । ४ । २१ ॥

लिण्निमित्तादेशादिकं न यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च सेटि थलि । बेदिथ । बेदथुः । बेद । बबाद । बबद । बेदिव । बेदिम । बदिता । बदिष्यति । बादिषति । बादिषाति । बदिषति । बदिषाति । बदति । बदाति । बदतु । अबदत् । अबादीदित्यादि । गद, व्यक्तायां वाचि । गदति । जगाद । गदिता । गदिष्यति । अगादीत् । अगदीदित्यादि । रद, विलेखने । रदति । रराद । रदिता । अरादीत् । अरदीत् । णद, अव्यक्ते शब्दे ।

## णो नः ॥ ६ । १ । ३१ ॥

धातोरादेर्णस्य नः । नदति । ननाद । नेदतुः । नदिता । नदिष्यति । नादिषति । नादिषाति । नदतु । अनदत् । नदेत् । नद्यात् । अनादीत् । अनदीत् । सर्वे नादयो णोपदेशाः । नृति, नन्दि, नर्दि, नक्कि, नाटि, नाथृ, नाधृ, नॄ, वर्जम् । अर्द, गतौ याचने च । अर्दति । अर्दतः । अर्दन्ति ।

## तस्मान्नुड् द्विहलः ॥ ७ । ४ । ७१ ॥

दीर्घीभूतादकारात् परस्य द्विहलो धातोर्नुट् । आनर्द । आनर्दतुः । आनर्दुः । अर्दिता । अर्दिष्यति । अर्दिषति । अर्दिषाति । आर्दीत् । आर्दिष्टाम् । आर्दिषुः । आर्दिष्यत् । नर्द, गर्द, शब्दे । नर्दति(२) ।

(१) पवर्गीयादिः ।

(२) "प्रनर्दति" इत्यत्र णोपदेशत्वाभावान्न णः ।

गर्दति । तर्द,हिंसायाम् । तर्दति । ततर्द । कर्द,कुत्सिते शब्दे । कर्दति चकर्द । अकर्दीत् । खर्द,दन्दशूके । अति, अदि, बन्धने । आनन्त । इदि, परमैश्वर्ये । इन्दति । इन्दाञ्चकार । इन्दाञ्चक्रतुः । इन्दाञ्चक्रुः ।"एकाचः"इतीण् निषेधः।इन्दाञ्चकर्थ । इन्दाञ्चक्रथुः । इन्दिता । इन्दिष्यति । इन्दिषति । इन्दिषाति । इन्दतु । ऐन्दत् । इन्देत् । इन्द्यात् । ऐन्दीत् । ऐन्दिष्यत् । बिदि, भिदि, अवयवे । बिन्दति(१) । भिन्दति । गडि वदनैकदेशे । गण्डति । णिदि, कुत्सायाम् । निन्दति । निनिन्द । टुनदि, समृद्धौ ।

## आदिर्ञिटुडवः ॥ १ । ३ । ५ ॥

उपदेशे धातोराद्या ञिटुडव इत्संज्ञकाः । नन्दति । ननन्द । नन्दिता । नन्दिष्यति । चदि,आह्लादे सुखे च । त्रदि, चेष्टायाम् । कदि, क्रदि, क्लदि, आह्वाने रोदने च । क्लिदि, परिदेवने । क्लिन्दति । चिक्लिन्द । शुन्ध, शुद्धौ । शुध्यात् । अशुन्धीत् । अशुन्धिष्यत् । इत्यष्टत्रिंशत्परस्मैपदिनः समाप्ताः ।

अथ द्विचत्वारिंशत् कवर्गीयान्ता आत्मनेपदिनः । शीकृ, सेचने । शीकते । लोकृ, दर्शने । श्लोकृ, संघाते । श्लोकते । द्रेकृ, ध्रेकृ, शब्दोत्साहयोः । द्रेकते । दिद्रेके । द्रेकिता । द्रेकिष्यते । द्रेकिषतै । द्रेकिषातै । रेकृ,शङ्कायाम् । रेकते । सेकृ,स्रेकृ,स्रकि, श्रकि, श्लकि, गत्यर्थाः । सेकते, । सिसेके(२) । शकि, शङ्कायाम् । अकि, लक्षणे । अङ्कते । आनङ्के । वकि, कौटिल्ये । वङ्कते । मकि, मण्डने । मङ्कते । कक लौल्ये । ककते । चकके । कुक, वृक,आदाने । वकते (ऋदुपधेभ्यो लिटः कित्वं

(१)-अवयवं करोतीत्यर्थः ।
(२)-अपोपदेशत्वान्न षः ।

गुणात्पूर्वविप्रतिषेधेन ) ववृके । चक, तृप्तौ प्रतीघाते च । चकते । चेके । चाकिषते । चाकिषातै । ककि, वकि, श्वकि, त्रकि, ढौकृ, त्रौकृ, ष्वष्क, वस्क, मस्क, टिकृ, टीकृ, तिकृ, तीकृ, रघि, लघि, गत्यर्थाः । ( सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः ) ष्वष्कते । षष्वष्के । लघि, भोजननिवृत्तावपि । अघि, वघि, मघि, गत्याक्षेपे । अङ्घते । आनङ्घे । मघि कैतवे च । राघृ, लाघृ, द्राघृ, सामर्थ्ये । ध्राघृ, इत्यपि केचित् । द्राघृ, आयामे च । श्लाघृ, कत्थने । श्लाघते । अनुदात्तेतो द्विचत्वारिंशदात्मनेपदिनः समाप्ताः ।

अथ परस्मैपदिनः पञ्चाशत् । फक्क, नीचैर्गतौ । फक्कति । पफक्क । फक्किषति । फक्किषाति । तक, हसने । तकति । तकि, कृच्छ्रजीवने । तङ्कति । बुक्क, भषणे । बुक्कति । कख, हसने । कखति । चकाख । ओखृ, राखृ, लाखृ, द्राखृ, ध्राखृ, शोषणालमर्थयोः । ओखति । ओखाञ्चकार । ओखिता । ओखिष्यति । ओखिषति । ओखिषाति । ओखतु । औखत् । ओखेत् । ओख्यात् । औखीत् । औखिष्यत् । शाखृ, श्लाखृ, व्याप्तौ । उख, उखि, वख, वखि, मख, मखि, णख, णखि, रख, रखि, लख, लखि, इख, इखि, ईखि, वल्ग, रगि, लगि, अगि, वगि, मगि, तगि, त्वगि, श्रगि, श्लगि, इगि, रिगि, लिगि, गत्यर्थाः । रिख-त्रख-त्रिखि-शिखि इत्यपि चतुरः केचित्पठन्ति । ओखति ।

अभ्यासस्यासवर्णे ॥ ६ । ४ । ७८ ॥

अभ्यासस्य इवर्णोवर्णयोरियङुवङौऽस्तोऽसवर्णेऽचि । उवोख(२) ।

---

( १ )-वर्णादाङ्गं बलीय इति ज्ञापनार्थमेवासवर्णग्रहणमिति केचित् ।

( २ )-सन्निपातपरिभाषया वृद्ध्यावेरित्याशं ।

ऊखतुः । ऊखुः । ओखिता । ओखिष्यति । ओखिषति । ओखिषाति । ओखतु । औखत् । ओखेत् । उख्यात् । औखीत् । औखिष्यत् । उङ्खति । उङ्खाञ्चकार । त्वगि, कम्पने । युगि, जुगि, बुगि, वर्जने । युङ्गति । घघ, हसने । मांघ, मण्डने । शिघि आघ्राणे । शिङ्घति ।

इति फक्काद्य उदात्ता उदात्तेतः पञ्चाशत् समाप्ताः ।

अथ चवर्गीयान्तास्त्रिनवतिः । वर्च, दीप्तौ । वर्चते । वर्चिषते । वर्चिषाते । वर्चताम् । षच, सेचने सेवने च । सचते । सेचे । सचिता । सचिष्यते । लोचृ, दर्शने । लोचते । लुलोचे । शच, व्यक्तायां वाचि । शेचे । श्वच, श्वचि, गतौ । श्वचते । श्वञ्चते । कच, बन्धने । कचि, काचि, दीप्तिबन्धनयोः । मच, मुचि, कल्कने । मेचे । मुमुञ्चे । मचि, धारणोच्छ्रायपूजनेषु । ममञ्चे । पचि, व्यक्तीकरणे । पञ्चते । ष्टुच, प्रसादे । स्तोचते । तुष्टुचे । ऋज, गतिस्थानार्जनोपार्जनेषु । अर्जते । आनृजे । ऋजि, भृजी, भर्जने । ऋञ्जते । ऋञ्जाञ्चक्रे । आर्ञ्जिष्ट । भर्जते । बभृज्जे । अभर्जिष्ट । एजृ, भ्रेजृ, भ्राजृ, दीप्तौ । एजाञ्चक्रे । ईज, गतिकुत्सनयोः । ईजाञ्चक्रे । ईजाम्बभूव । ईजामास । वर्चादय-उदात्ता अनुदात्तेत एकविंशतिः समाप्ताः ।

अथ द्विसप्ततिर्व्रज्यन्ताः परस्मैपदिनः । शुच, शोके । शोचति । कुच, शब्दे तारे । कोचति । कुञ्च, क्रुञ्च, कौटिल्याल्पीभावयोः । कुञ्चति । क्रुञ्चति । कुच्यात् । क्रुच्यात् । लुञ्च, अपनयने । लुच्यात् । अञ्चु, गतिपूजनयोः । अच्यात् । पूजार्थे–अञ्च्यात् । वञ्चु, चञ्चु, तञ्चु, त्वञ्चु, म्रुञ्चु, म्लुञ्चु, म्रुचु, म्लुचु, गत्यर्थाः । वच्यात् । चच्यात् । तच्यात् । त्वच्यात् । म्रुच्यात् । म्लुच्यात् ।

जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥३।१।५८॥

एभ्यश्च्लेरङ् वा। अम्रुचत्। अम्रोचीत्। अम्लुचत्। अम्लोचीत्। ग्रुचु, ग्लुचु, कुजु, खुजु, स्तेयकरणे। जुग्रोच। अग्रुचत्। अग्रोचीत्। जुग्लोच। अग्लुचत्। अग्लोचीत्। अकोजीत्। अखोजीत्। ग्लुञ्चु, षस्ज, गतौ। अग्लुचत्। अग्लुञ्चीत्। सज्जति(२)। गुजि, अव्यक्ते शब्दे। गुञ्जति। जुगुञ्ज। गुञ्ज्यात्। अगुञ्जीत्। अगुञ्जिष्यत्। अर्च पूजायाम्। अर्चति। आनर्च। अर्चिषति। आर्चिषाति। म्लेच्छ, अव्यक्ते शब्दे। म्लेच्छति। मिम्लेच्छ। लछ, लाछि, लक्षणे। लच्छति। ललच्छ। लच्छिषति। लाञ्छिषाति। लाञ्छति। ललाञ्छ। वाछि, इच्छायाम्। वाञ्छति। आछि, आयामे। आञ्छति। आनञ्छ(३)। ह्रीच्छ, लज्जायाम्। ह्रीच्छति। जिह्रीच्छ। हुर्छा, कौटिल्ये। उपधायाञ्चेति दीर्घः। हूर्छति। मुर्छा, मोहसमुच्छ्राययोः। मूर्छति। स्फुर्छा, विस्मृतौ। स्फूर्छति। युच्छ, प्रमादे। युच्छति। उछि, उञ्छे। उञ्छति। उञ्छाञ्चकार। उछी, विवासे। विवासः समाप्तिः। व्युच्छति। ध्रज, ध्रजि, धृज, धृजि, ध्वज, ध्वजि, गतौ। ध्रजति। ध्रञ्जति। धर्जति। धृञ्जति। ध्वजति। ध्वञ्जति। कूज- अव्यक्ते शब्दे। कूजति। अर्ज, षर्ज, अर्जने। अर्जति। आनर्ज। गर्ज, शब्दे। गर्जति। तर्ज, भर्त्सने। तर्जति।

(१) स्तन्भुः सौत्रः।

(२) अयमात्मनेपद्यपीति केचित्।

(३) अत आदेरित्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थम्। तेन दीर्घाभावान्नुट्। तपरकरणं मुखसुखार्थमिति मते तु नुट्-आनाञ्छ।

ऋर्जे, व्यथने । खर्ज़, पूजने । चखर्ज । अज, गतिक्षेपणयोः । अजति।

अजेर्व्यघञपोः ॥ २ । ४ । ५६ ॥

आर्धधातुकेऽजेर्वी न तु घञपोः । ( वलादावार्धधातुके वेष्यते ) विवाय । विव्यतुः । विव्युः । एरनेकाचइतियण् । थलि एकाच इतीण्निषेधे प्राप्ते ।

कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ ७ । २ । १३ ॥

एभ्यो लिट इण्न । क्रादीनां चतुर्णां ग्रहणं नियमार्थम् । प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्य इति । ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम् ।

अचस्तास्वत्थल्यनिटो नित्यम् ॥ ७ । २ । ६१ ॥

उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न ।

उपदेशेऽत्वतः ॥ ७ । २ । ६२ ॥

उपदेशेऽत्वतस्तासौ नित्यानिटः परस्य थलइण्न ।

ऋतो भारद्वाजस्य ॥ ७ । २ । ७३ ॥

तासौ नित्यानिट ऋदन्तादेव थलो नेड् भारद्वाजस्य मते । तेनान्यस्य स्यादेव । विवयिथ । विवेथ । आजिथ । वेता । अजिता । वेष्यति । अजिष्यति । अजतु । आजत् । अजेत् । वीयात् ।

सिचि वृद्धिः परस्मैपदेषु ॥ ७ । २ । १ ॥

इगन्ताङ्गस्य वृद्धिः परस्मैपदे सिचि । अवैषीत् । आजीत् ।

अवेष्यत् । आजिष्यत् । तेज, पालने । तेजति । खज, मन्थे । खजति । खजि, गतिवैकल्ये । खञ्जति । एजृ, कम्पने । एजति । एजाञ्चकार । टुओस्फूर्जा, वज्रनिर्घोषे । स्फूर्जति । पुस्फूर्ज । क्षि, क्षये । क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । चिक्षयिथ । चिक्षेथ । क्षेता ।

अकृत्सार्वधातुकयोर्दीर्घः ॥ ७ । ४ । २५ ॥

अजन्ताङ्गस्य दीर्घो यादौ प्रत्यये न तु कृत्सार्वधातुकयोः । क्षीयात् । अक्षैषीत् । क्षीज, अव्यक्ते शब्दे । चिक्षीज । लज, लजि, भर्जने । लाज, लाजि, भर्त्सने च । जज, जजि, युद्धे । तुज, हिंसायाम् । तोजति । तुतोज । तुजि, पालने । गज, गजि, गृज, गृजि, मुज, मुजि, शब्दार्थाः । गज मदने च । वज, व्रज, गतौ । वदव्रजेति वृद्धिः । अव्राजीत् । इति शुचादय उदात्ता उदात्तेतः क्षिवर्जं परस्मैपदिनः समाप्ताः ।

अथ टवर्गीयान्ता द्वाविंशत्यधिकं शतम् । अट्ट, अतिक्रमणहिंसनयोः । दोपधस्तोपधो वा । अट्टते । आनट्टे । वेष्ट, वेष्टने । वेष्टते । विवेष्टे । चेष्ट, चेष्टायाम् । चेष्टते । चिचेष्टे । अचेष्टिष्ट । गोष्ट, लोष्ट । सङ्घाते । जुगोष्टे । लुलोष्टे । घट्ट चलने । घट्टते । जघट्टे । स्फुट, विकसने । स्फोटते । पुस्फुटे । अठि गतौ । अण्ठते । आनण्ठे । वठि, एकचर्य्यायाम् । वण्ठते । ववण्ठे । मठि, कठि, शोके । शोक इहाऽऽध्यानम् । मण्ठते । ममण्ठे । कण्ठते । चकण्ठे । मुठि, पालने । मुण्ठते । हेठ, विबाधायाम् । हेठते । जिहेठे । एठ, च । एठते । एठाञ्चक्रे । हिडि, गत्यनादरयोः । हिण्डते । जिहिण्डे । हुडि,

सङ्घाते । कुण्डते । जुहुण्डे । कुडि, दाहे । वडि, विभाजने । मडि, च । भडि परिभाषणे(१) । बभण्डे । पिडि, सङ्घाते । पिपिण्डे । मुडि, मार्जने । न्यग्भावोऽपि मार्जनम् । तुडि, तोडने । हुडि, वरणे-वरणं स्वीकारः । चडि, कोपे । चण्डते । शडि, रुजायां संघाते च । तडि, ताडने । पडि, गतौ । कडि, मदे । खडि मन्थे । हेडृ, होडृ, अनादरे । वाडृ, आप्लाव्ये । आप्लाव्यमाप्लावः । द्राडृ, ध्राडृ, विशरणे । शाडृ, श्लाघायाम् । शाडते । डलयोरभेदात् शालते इत्यपि । इत्यहादय उदात्ता अनुदात्तेतः षट्त्रिंशत् समाप्ताः । शौटृ, गर्वे । शौटति । शुशौट । यौटृ, बन्धे । यौटति । म्लेटृ, म्रेडृ, उन्मादे । म्लेटति । म्रेडति । कटे, वर्षावरणयोः । चकाट । कट्यात् । अतो हलादेरिति-वृद्धौ प्राप्तायाम्—

ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥ ७ । २ । ५ ॥

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि । अकटीत् । अकटिष्यत् । अट, पट, गतौ । आट । आटतुः । आटुः । पपाट । पेटतुः । पेटुः । रट, परिभाषणे । रराट । लट, बाल्ये । ललाट । शट, रुजाविशरणगत्यवसादनेषु । शशाट । वट, वेष्टने । ववाट । ववटतुः । किट, खिट, त्रासे । शिट, षिट, अनादरे । जट, झट, संघाते । भट, भृतौ । तट, उच्छ्राये । खट, काङ्क्षायाम् । नट, नृत्तौ । पिट, शब्द संघातयोः । हट, दीप्तौ । षट, अवयवे । लुट, विलोडने । डान्तोऽयमित्येके । चिट, परप्रेष्ये । विट, शब्दे । बिट, आक्रोशे । हिट, इत्येके । इट, किट, कटी(२), गतौ । एटति ।

(१) परिहासः सनिन्दोपालम्भश्च परिभाषणम् ।

(२) कटे च ई ई इति प्रश्लेषाद् भवति । इयाय । अयाञ्चकारेत्याद्यपि ।

मडि, भूषायाम् । कुडि, वैकल्ये । मुड, मुड, मर्दने । चुडि, अल्पीभावे । चुण्डति । चुचुण्ड । मुडि, खण्डने । पुडि, चेत्येके । रुटि, लुटि, स्तेये । रुठि, लुठि, इत्येके । रुडि-लुडि-इत्यपरे । स्फुटिर्, विशरणे । स्फुटि-इत्यपि केचित् । पठ, व्यक्तायां वाचि । पेठतुः । पेठिथ । अपठीत् । अपाठीत् । वठ, स्थौल्ये । ववठतुः । ववठिथ । मठ, मदनिवासयोः । कठ, कृच्छ्रजीवने । रठ, परिभाषणे । हठ, प्लुतिशठत्वयोः । बलात्कार इत्येके । हठति । जहाठ । रुठ, लुठ, उठ, उपघाते । ओठति । ऊठेत्येके । ऊठति । ऊठाञ्चकार । पिठ, हिंसासङ्क्लेशनयोः । शठ, कैतवे च । शुठ, प्रतीघाते । शुठि, इत्येके । कुठि, च । कुण्ठति । लुठि, आलस्ये प्रतिघाते च । शुठि, शोषणे । रुठि, लुठि, गतौ । चुड्ड, भावकरणे । भावकरणमभिप्रायाविष्करणम् । चुड्डति । चुचुड्ड । अड्ड, अभियोगे । अड्डति । आनड्ड । कड्ड, कार्कश्ये । कड्डति । चुड्डादयो दोपधाः । क्रीडृ, विहारे । चिक्रीड । तुडृ, तोडने । तूडृ, इत्येके । हुडृ, हूडृ, होडृ गतौ । हुड्यात् हूड्यात् । होड्यात् । रौडृ, अनादरे । रोडृ, लोडृ, उन्मादे । अड, उद्यमे । लड, विलासे । लल इत्येके । कड, मदे । कडि, इत्येके । गडि, वदनैकदेशे । गण्डति । इति शौटादय उदात्ता उदात्तेतो व्यशीतिः परस्मैपदिनः ॥ अथ पवर्गीयान्ता अशीतिः । तत्रानुदात्तेतःस्तोभत्यन्ताअष्टात्रिंशत् । तिपृ, तेपृ, ष्टिपृ, ष्टेपृ, क्षरणार्थाः । आद्योऽनुदात्तः । तेपते । तितिपे । क्रादिनियमादिट् । तितिपिषे । तेप्ता । तेप्स्यते ।

## लिङ्सिचावात्मनेपदेषु ॥ १ । २ । ११ ॥

इक्समीपाद्धलः परौ झलादी लिङ् आत्मनेपदपरः सिच्चेत्येतौ कितौ स्तः । तिप्सीष्ट । अतिप्त । अतिप्साताम् । अतिप्सत ।

तेपते । तितेपे । तिष्टिपे । तिष्टिपाते । तिष्टिपिरे । तेपृ, कम्पने च । थिपृ, थेपृ, इत्यन्ये । थेपते । तिथेपे । ग्लेपृ, दैन्ये । ग्लेपते । जिग्लेपे । टुवेपृ, कम्पने । वेपते । केपृ, गेपृ, ग्लेपृ च । चात्कम्पने गतौ च । मेपृ, रेपृ, लेपृ, गतौ । हेपृ, थेपृ, च गत्यर्थौ । त्रपूष्, लज्जायाम् । त्रपते । त्रेपते । त्रपन्ते ।

तॄफलभजत्रपश्च ॥ ६ । ४ । १२२ ॥

एषामत एकारोऽभ्यासलोपश्च किति लिटि सेटि थलि च । त्रेपे । त्रेपाते । त्रेपिरे । ऊदित्वादिड्वा । त्रपिता । त्रप्ता । त्रपिषीष्ट । त्रप्सीष्ट । कपि, चलने । कम्पते । चकम्पे । रबि, लबि, अबि, शब्दे । ररम्बे । ललम्बे । आनम्बे । लबि, अवस्रंसने च । कबृ, वर्णे । चकबे । क्लीबृ, अधार्ष्ट्ये । चिक्लीबे । क्षीबृ, मदे । क्षीबते । शीभृ कत्थने । चीभृ च । रेभृ, शब्दे । अभि, रभि, इत्येके । ष्टभि, स्कभि, प्रतिबन्धे । स्तम्भते । उत्तम्भते(१) । जभि, जृभि, गात्रविनामे ॥

रधिजभोरचि ॥ ७ । १ । ६१ ॥

एतयोर्नुमागमोऽचि । जम्भते । जजम्भे । जम्भिता । अजम्भिष्ट । जृम्भते । जजृम्भे । शल्भ, कत्थने । शल्भते । शशल्भे । वल्भ, भोजने । ववल्भे । गल्भ, धार्ष्ट्ये । गल्भते । स्रम्भु, प्रमादे । स्रम्भते । सस्रम्भे । दन्त्यादिस्तालव्यादिश्च । श्रम्भते । ष्टुभु, स्तम्भे । स्तोभते । तुष्टुभे । अस्तोभिष्ट । इति तिपादय उदात्ता अनुदात्तेतस्तिपिवर्जमात्मनेभाषा अष्टत्रिंशत्समाप्ताः । अथ द्वाचत्वारिंशत् परस्मैपदिनः । गुपू, रक्षणे ।

(१)–उदःस्थास्तम्भोरिति पूर्वसवर्णः ।

गुपूधूपविच्छिपणिपनिभ्य आयः ॥ ३ । १ । २८ ॥

एभ्य आयः प्रत्ययः स्वार्थे । पुगन्तेति गुणः ।

सनाद्यन्ताधातवः ॥ ३ । १ । ३२ ॥

सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञकाः । धातुत्वाल्लडादयः । गोपायति ।

आयादय आर्द्धधातुके वा ॥ ३ । १ । ३१ ॥

आर्द्धधातुकविवक्षायामायादयो वा ।

कास्प्रत्ययादाममन्त्रे लिटि ॥ ३ । १ । ३५ ॥

कास्धातोः प्रत्ययान्तेभ्यश्च आम् लिटि, न तु मन्त्रे (कास्यनेकाज्ग्रहणं कर्तव्यम् ) सूत्रे प्रत्ययग्रहणमपनीय तस्स्थानेऽनेकाच इति वाच्यमिति प्राञ्चः ।

आर्द्धधातुके ॥ ६ । ४ । ४६ ॥

इत्यधिकृत्य ।

अतो लोपः ॥ ६ । ४ । ४८ ॥

आर्द्धधातुकोपदेशकाले यदकारान्तं तस्याकारस्य लोप आर्द्धधातुके । गोपायाञ्चकार । गोपायाम्बभूव । गोपायामास । जुगोप । जुगुपतुः । जुगुपुः । ऊदित्वाद्वेट् । जुगोपिथ । जुगोप्थ । गोपा-

१-सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विप्णिज्यङौ तथा । यगायेयङ्णिङश्चेति द्वादशामी सनादयः ॥

पिता। गोपिता। गोप्ता। गोपायिष्यति। गोपिष्यति। गोप्स्यति। गोपाय्यात्। गुप्यात्। अगोपायीत्। अगोपीत्। अगौप्सीत्। धूप, सन्तापे। धूपायति। धूपायाञ्चकार। दुधूप। धूपायिता। धूपिता। जप, जल्प, व्यक्तायां वाचि। जपति। जल्पति। जप, मानसे च। चप, सान्त्वने। षप, समवाये। समवायः सम्बन्धः सम्यगवबोधो वा। सपति। रप, लप, व्यक्तायां वाचि। रपति। लपति। चुप, मन्दायां गतौ। चोपति। चुचोप। तुप, तुम्प, त्रुप, त्रुम्प, तुफ, तुम्फ त्रुफ, त्रुम्फ, हिंसार्थाः। तोपति। तुतोप। तुम्पति। तुतुम्प। तुतुम्पतुः। तुम्पिता। तुम्पिष्यति। तुम्पतु। अतुम्पत्। तुप्यात्। "प्रात्तुम्पतौ गवि कर्तरि" इति पारस्करादिगणे पाठात्सुट्। प्रस्तुम्पति गौः। श्तिपा निर्देशाद्यङ्लुकि न। प्रतोतुम्पीति। त्रोपति। त्रुम्पति। तोफति। तुम्फति। पर्व, रफ, रफि, अर्ब, पर्ब, लर्ब, बर्ब, मर्ब, कर्ब, खर्ब, गर्ब, शर्ब, षर्ब, चर्ब, गतौ। चर्ब, अदने च। पर्वति। पपर्व। रफति। रम्फति। अर्बति। आनर्ब। पर्बति। लर्बति। बर्बति। मर्बति। कर्बतीत्यादयः। कुबि, आच्छादने। कुम्बति। लुबि, तुबि, अर्दने। लुम्बति। तुम्बति। चुबि, वक्त्रसंयोगे। चुम्बति। षृभु, षृम्भु, हिंसार्थौ। सर्भति। ससर्भ। सर्भिता। सृम्भति। ससृम्भ। सृभ्यात्। षिभु, षिम्भु, इत्येके। सेभति। सिम्भति। शुभ, शुम्भ, भाषणे। भासनेइत्येके। हिंसायामित्यन्ये। इति गुपादय उदात्ता अनुदात्तेत एकचत्वारिंशत्समाप्ताः। अथानुनासिकान्ताश्चित्वारिंशत्। तत्रानुदात्तेतो दश। घिणि। घुणि, घृणि, ग्रहणे। घिणते। घिण्णते। घिणन्ते। जिघिणे। घुणते। जुघुणे। घृणते। जघृणे।

१–भाष्ये "क्षिनुपाशपे" ति परिभाषानोपलभ्यते।

घुण, घूर्ण, भ्रमणे । घुणते । घूर्णते । पण, व्यवहारे स्तुतौ च । पन, च । स्तुतावित्येव संबध्यते । पृथङ्निर्देशात् । पनिसाहचर्यात्पणेरपि स्तुतावेवायप्रत्ययः । व्यवहारे तु पणते । पेणे । पणितेत्यादि । स्तुतावनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदम् । पणायति । पणायाञ्चकार । पेणे । पणायितासि । पणितासे । पणाय्यात् । पनायति । पनायाञ्चकार । पेने । भाम, क्रोधे । भामते । बभामे । क्षमूष्, सहने । क्षमते । चक्षमे । चक्षमिषे । चक्षंसे । चक्षमिध्वे । चक्षन्ध्वे । चक्षमिवहे ।

म्वोश्च ॥ ८ । २ । ६५ ॥

मान्तस्य धातोर्मस्य नकारादेशो मकारे वकारे च परे । चक्षण्वहे । चक्षमिमहे । चक्षण्महे । क्षमिष्यते । क्षंस्यते । क्षमेत । क्षमिषीष्ट । क्षंसीष्ट । अक्षमिष्ट । अक्षंस्त । कमु, कान्तौ । कान्तिरिच्छा ।

कमेर्णिङ् ॥ ३ । १ । ३० ॥

स्वार्थे । ङित्त्वात्तङ् । कामयते ।

अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ६ । ४ । ५५ ॥

आम्, अन्त, आलु, आय्य, इत्नु, इष्णु, एषु णेरयादेशः । णेरनिटीत्यस्यापवादः । कामयाञ्चक्रे । कामयाम्बभूव । कामयामास । आयादय आर्द्धधातुके वा । चकमे । कामयिता । कमिता । कामयिष्यते । कमिष्यते । कामयिषतै । कामयिषातै । कामिषैतै । कामिषातै । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट । कामिषीष्ट ।

णिश्रिद्रुस्रुभ्यः कर्तरि चङ्॥ ३ । १ । ४८॥

ण्यन्तात्छ्र्यादिभ्यश्च च्लेश्चङ् कर्त्रर्थे लुङि परे।

णेरनिटि ॥ ६ । ४ । ५१ ॥

अनिडादावार्द्धधातुके णेर्लोपः। परत्वादेरनेकाच इति यणि-प्राप्ते। (यणल्लोपाविययङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन भवतः) णिलोपस्य तु पाचयतेः पक्तिरित्यादौ क्तिजन्तमवकाशः। वस्तुतस्तु अनिटीति वचनसामर्थ्यादार्द्धधातुकमात्रमस्य विषयः। तथाचेयङादेरपवाद एवायम् । अततचत् । आटिटत् । कारणा। कारकः। कार्यते।

णौ चङ्युपधाया ह्रस्वः ॥ ७ । ४ । १ ॥

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः।

चङि ॥ ३ । १ । ११ ॥

चङि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य।

सन्वल्लघुनि चङ्परेऽनग्लोपे ॥ ७ । ४ । ९३ ॥

अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरित्येतत्परं यल्लघु तत्परो योऽङ्गस्याभ्यासस्तस्य सनीव कार्यं णावग्लोपेऽसति। अथवा-चङ्परे-णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यादिप्राग्वत्।

सन्यतः ॥ ७ । ४ । ७९ ॥

अभ्यासस्यात इकारः सनि।

## दीर्घो लघोः ॥ ७ । ४ । ९४ ॥

लघोरभ्यासस्य दीर्घः सन्वद्भावविषये । अचीकमत । अचीकमेताम् । अचीकमन्त । (णिङभावपक्षे कमेश्च्लेश्चङ् वक्तव्यः)अचकमत । अचकमेताम् । अचकमन्त ।अकामयिष्यत । अकमिष्यत । इणिघिणादय उदात्ता अनुदात्तेत आत्मनेभाषा दश समाताः । अथ द्वात्रिंशत्परस्मैपदिनः । अण, रण, वण, भण, मण, कण, कण, व्रण, भ्रण, ध्वण, शब्दार्थाः । अणति । रणति । वणति ।वकारादित्वादेत्वाभ्यासलोपौ न । ववणतुः । ववणिथ । धण, इत्येके । धणति । ओणृ, अपनयने । ओणति । ओणाञ्चकार । शोणृ, वर्णगत्योः । शोणति । शुशोण । श्रोणृ, संघाते । श्रोणति । श्लोणृ, च । पैणृ, गतिप्रेरणश्लेषणेषु । पैणति । पिपैण । ध्रण, शब्दे । उपदेशे रान्तोऽयम् । यङ्लुकि दन्ध्रन्ति । ध्रणति । बणेरप्यपिकेचित् । बणति । बबाण । बेणतुः । कनी, दीप्तिकान्तिगतिषु । चकान । ष्टन, वन, शब्दे । स्तनति । वनति । वन, षण, सम्भक्तौ । वनेरर्थभेदात्पुनः पाठः । सनति । ससान । सेनतुः ।

## ये विभाषा ॥ ६ । ४ । ४३ ॥

जनसनखनामात्वं वा यादौ क्ङिति । सायात् । सन्यात् । असानीत् । असनिष्यत् । अम, गत्यादिषु । अमति । आम ! द्रम, हम्म, मीमृ, गतौ । द्रमति । दद्राम । हम्यन्तेति न वृद्धिः । अद्रमीत् ।

(१) व्यधिकरणे षष्ठ्यौ ।

(२) कनी दीप्तिकान्तिगतीत्यत्र गतेः परयोः शब्दसंभक्त्योरादिशब्देन संग्रहः ।

छमति। जछम्म। झमति। मिमीम। अयं शब्दे च। चमु, छमु, जमु, झमु, अदने।

ष्ठिवुक्लमुचमां शिति॥ ७। ३। ७५॥

एषामचो दीर्घश्शिति। (दीर्घस्त्वमाङि चम इति वक्तव्यम्) आचामति। आङि किम्। चमति। विचमति। अचमीत्। जिमु, इत्येके। जेमति। जिजेम। क्रमु, पादविक्षेपे।

(१) वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः॥ १। ३। ७०॥

एभ्यः श्यन्वा कर्त्रर्थे सार्वधातुके।

क्रमः परस्मैपदेषु॥ ७। ३। ७६॥

क्रमेर्दीर्घः परस्मैपदेपरे शिति। क्राम्यति। क्रामति। चक्राम। क्राम्यतु। क्रामतु। परस्मैपदे किम्। उपक्रमते।

स्नुक्रमोरनात्मनेपदनिमित्ते (२)॥ ७। २। ३६॥

अत्रैवेट्। अक्रमीत्। अक्रमिष्यत्। इत्यष्टादश उदात्ता उदात्तेतोद्वात्रिंशत्परस्मैभाषाः समाप्ताः। अथ यवर्गीयान्ता अष्टात्रिंशत्यधिकं शतम्। अय, वय, पय, मय, चय, तय, णय, गतौ। अयते।

(१) उभयत्र विभाषेयम्। भ्रमिक्रमित्रसिभ्यो नित्यं प्राप्ते इतरेषामप्राप्ते चारम्भात्।

(२) आत्मनेपदनिमित्ताभावे इत्यर्थः।

दयायासश्च ॥ ३ । १ । ३७ ॥

दय, अय्, आस्, एभ्य आम् लिटि । अयाञ्चक्रे । अयेत । अयिषीष्ट ।

विभाषेटः ॥ ८ । ३ । ३७ ॥

इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्धन्यः । अयिषीढ्वम् । अयिषीध्वम् । आयिष्ट । आयिढ्वम् । आयिध्वम् ।

उपसर्गस्यायतौ ॥ ८ । २ । १९ ॥

अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वम् । प्लायते । पलायते । निर्दुसोरुत्वस्यासिद्धत्वान्न लत्वम् । निरयते । दुरयते । निरदुरोर्हलु । निलयते । दुलयते । वयते । वयिषीढ्वम् । वयिषीध्वम् । दय, दान-गतिरक्षणहिंसाऽऽदानेषु । आदानं ग्रहणम् । दयते । दयाञ्चक्रे । रय, गतौ । रयते । रेये । ऊयी, तन्तुसन्ताने । ऊयाञ्चक्रे । पूयी, विशरणे दुर्गन्धे च । पूयते । पुपूये । क्नूयी, शब्दे, उन्दे च । क्नूयते । चुक्नूये । क्ष्मायी, विधूनने । चक्ष्माये । स्फायी, ओप्यायी, वृद्धौ । स्फायते । पस्फाये । प्यायते ।

लिड्यङोश्च ॥ ६ । १ । २९ ॥

लिटि यङि च प्यायः पीभावः । पुनः प्रसङ्गविज्ञानात् पी-शब्दस्य द्वित्वम् । पिप्ये । पिप्याते । पिप्यिरे ।

दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ॥ ३ । १ । ६१ ॥

एभ्यश्च्लेश्चिण् वा एकवचने तशब्दे परे ।

## चिणो लुक् ॥ ६ । ४ । १०४ ॥

चिणः परस्य लुक् । इति तकारस्य लोपः । अप्यायि । अप्यायिष्ट । तायृ, सन्तानपालनयोः । सन्तानः प्रबन्धः । तायते । तताये । अतायि । अतायिष्ट । शल, चलनसंवरणयोः । वल, वल्ल, संवरणे सञ्चरणेच । वलते । वल्लते । ववले । ववल्ले । मल, मल्ल, धारणे । मलते । मल्लते भल, भल्ल, परिभाषणहिंसाऽऽदानेषु । भलते । भल्लते । बभले । बभल्ले । कल, शब्दसंख्यानयोः । कलते । चकले । कल्ल, अव्यक्ते शब्दे । म ते । तेवृ, देवृ, देवने । तितेवे । दिदेवे । षेवृ, गेवृ, ग्लेवृ, पेवृ, मेवृ, म्लेवृ, सेवने । सेवते । सिषेवे । गेवते । जिगेवे । जिग्लेवे । पिपेवे । मेवते । म्लेवते । शेवृ, खेवृ, केवृ, इत्येके । रेवृ, प्लवगतौ । प्लवगतिः-प्लुतगतिः । रेवते । इत्ययादय उदात्ता अनुदात्तेत आत्मनेभाषाः सप्तत्रिंशत्समाप्ताः ।

अथ परस्मैपदिन एकनवतिः । मव्य, बन्धने । मव्यति । ममव्य । सूर्क्ष्य, ईर्क्ष्य, ईर्ष्य, ईर्ष्यार्थाः । सूर्क्ष्यति । ईर्क्ष्यति । ईर्ष्यति । ईर्क्ष्याञ्चकारेत्यादि । हय, गतौ । हयति । जहाय । अहयीत् । यान्तत्वान्न वृद्धिः । शुच्य, अभिषवे । अवयवानां शिथिलीकरणं, सुरायाः सन्धानं वाऽभिषवः । स्नानञ्च । शुशुच्य । चुच्य इत्येके । हर्य्य, गतिकान्त्योः । हर्य्यति । जहर्य्य । अल, भूषणपर्य्याप्तिवारणेषु । अलति । आल ।

## अतो ल्रान्तस्य ॥ ७ । २ । २ ॥

ल्रेतिलुप्तषष्ठीकम् । अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्याचो वृद्धिः परस्मैपदे सिचि नेटीति निषेधस्यातो हलादेर्लघोरिति विकल्पस्य चापवादः । माभवानालीत् । आलिष्टाम् । आलिषुः । ञिफला,

विशरणे । फलति । पफाल । नॄफलेत्येत्वम् । फेलतुः । फेलुः । अफालीत् । मील, श्मील, स्मील, क्ष्मील, निमेषणे । निमेषणमक्षिसङ्कोचः । मीलति । मिमील । पील, प्रतिष्टम्भे । प्रतिष्टम्भो रोधनम् । नील, वर्णे । निनील । शील, समाधौ । शीलति । कील, बन्धने । कीलति । चिकील । कूल, आवरणे । कूलति । शूल, रुजायां संघोषे च । तूल, निष्कर्षे । निष्कर्षो निष्कोषणम् । तच्चान्तर्गतस्य बहिर्निःसारणम् । तुतूल । पूल, संघाते । मूल, प्रतिष्ठायाम् । फल, निष्पत्तौ फेलतुः । फेलुः । चुल्ल, भावकरणे । भावकरणमभिप्रायाविष्कारः । फुल्ल, विकसने । चिल्ल, शैथिल्ये, भावकरणे च । तिल, गतौ । तेलति । तिल्ल, इत्यन्ये । तिल्लति । वेल्ल, चेल्ल, केल्ल, खेल्ल, क्ष्वेल्ल, वेल्ल, चलने । पञ्च लृदितः । षष्ठोऽलोपधः । पेल्ल, फेल्ल, शेल्ल, गतौ । षेल्ल, इत्येके । स्खल, सञ्चलने । चस्खाल । अस्खालीत् । खल, सञ्चये । गल, अदने । गलति । अगालीत् । षल, गतौ । सलति । दल, विशरणे । श्वल, श्वल्ल, आशुगमने । शश्वाल । अश्वालीत् । शश्वल्ल । अश्वल्लीत् । खोल्ल, खोर्ऋ, गतिप्रतिघाते । खोलति । खोरति । धोर्ऋ, गतिचातुर्ये । धोरति । त्सर, छद्मगतौ । तत्सार । अत्सारीत् । क्मर, हूर्च्छने । चक्मार । अभ्र, वभ्र, मभ्र, चर, गत्यर्थाः । चर, भक्षणे च । ष्ठिवु, निरसने । ष्ठिवुक्लम्वितिदीर्घः । ष्ठीवति । तिष्ठेव । तिष्ठिवतुः । तिष्ठिवुः । द्वितीयष्ठकारोवा । टिष्ठेव । टिष्ठिवतुः । टिष्ठिवुः । हलिचेतिदीर्घः । ष्ठीव्यात् । जि, जये । जयति । जयतः । जयन्ति ।

सन्लिटो र्जेः ॥ ७ । ३ । ५७ ॥

सनि लिटि च परेऽभ्यासादुत्तरस्य कुत्वम् । जिगाय । जिग्यतुः ।

जिग्युः । जिगयिथ । जिगेथ । जिगाय । जिगय । जिग्यिव । जिग्यिम । जेता । जेष्यति । जैषति । जैषाति । जैषत् । जैषात् । जैषद् । जैषा- दित्यादि । जयतु । अजयत् । जयेत् । जीयात् । अजैषीत् । अजे- ष्यत् । जीव, प्राणधारणे । जीवति । जिजीव । जीविष्यति । जीविषति । जीविषाति । पीव, मीव, तीव, णीव, स्थौल्ये । पीवति । मीवति । तीवति । नीवति । क्षिवु, क्षेवु, निरसने । क्षेवति । चिक्षेव । उर्वी, तुर्वी, थुर्वी, दुर्वी, धुर्वी, हिंसार्थाः । उपधायाश्चेति दीर्घः । ऊर्वति । ऊर्वाञ्चकार । ऊर्वाम्बभूव । ऊर्वामास । ऊर्विषति । ऊर्विषाति । गुर्वी, उद्यमने । गूर्वति । जुगूर्व । मुर्वी, बन्धने । मूर्वति । मुमूर्व । पुर्व, पर्व, मर्व, पूरणे । चर्व, अदने । भर्व, हिंसायाम् । कर्व, खर्व, गर्व, दर्पे । अर्व, शर्व, षर्व, हिंसायाम् । अर्वति । आनर्व । शर्वति । सर्वति । इवि, व्याप्तौ । इन्वति । इन्वाञ्चकार । इन्वि- षति । इन्विषाति । पिवि, मिवि, णिवि, सेचने । सेवने चेत्येके । पि- न्वति । हिवि, दिवि, धिवि, जिवि, प्रीणनार्थाः । हिन्वति । दिन्वति ।

धिन्विकृण्व्योर च ॥ ३ । १ । ८० ॥

शब्विषयेऽनयोरकारान्तादेश उप्रत्ययश्च । अतोलोपः । स्थानि- वत्त्वान्न लघूपधगुणः । धिनोति । धिनुतः । धिन्वन्ति ।

लोपश्चास्यान्यतरस्यां म्वोः ॥ ६ । ४ । १०७ ॥

असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा म्वोः

(१) चादु प्रत्ययः "तनादिकृञ्भ्यः" इति सूत्रादनुकृष्टः।

धिन्वः । धिनुवः । धिन्मः । धिनुमः । मिपि तु परत्वाद् गुणः । धिनोमि । धिनोतु । धिनुतात् । धिनुताम् । धिन्वन्तु ।

उतश्च प्रत्ययादसंयोगपूर्वात् ॥ ६ । ४ । १०६ ॥

असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात् परस्य हेर्लुक् । धिनु । धिनुतात् । धिनुतम् । धिनुत । धिनवानि । धिनवाव । धिनवाम । जिन्वति । रिवि, रवि, धवि, गत्यर्थाः । रिण्वति । रण्वति । धन्वति । कृवि, हिंसाकरणयोश्च । चादुगतौ । "ऋवर्णाच्चेतिवक्तव्यम्" इति णत्वे कृणोतीत्यादि । धिनोतिवत् । मव, बन्धने । मवति । मेवतुः । मेवुः । अमवीत् । अमावीत् । अव, रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु । अवति । आव । अविता । अविष्यति । आविषाति । आविषाति । अवतु । आवत् । अवेत् । अव्यात् । आवीत् । आविष्यत् । इति मव्यादय उदात्तादुदात्तेतो-जयतिवर्जं, परस्मैभाषाः षवर्चतिः समाप्ताः । धावु, गतिशुद्ध्योः । उदात्तः स्वरितेदुभयतोभाषः । धावति । धावते । दधाव । दधावे । अथोष्मान्ता आत्मनेपदिनो ङिपर्यन्ताश्च । धुक्ष, धिक्ष, सन्दीपनक्लेशनजीवनेषु । धुक्षते । दुधुक्षे । धिक्षते । दिधिक्षे । वृक्ष, वरणे । वृक्षते । ववृक्षे । शिक्ष, विद्योपादाने । शिक्षते । भिक्ष, भिक्षायामलाभे लाभे च । भिक्षते । क्लेश, व्यक्तायां वाचि । बाधन इत्यन्ये । क्लेशते । चिक्लेशे । दक्ष, वृद्धौ शीघ्रार्थे च । दक्षते । ददक्षे । दीक्ष, मौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे । ईक्ष, दर्शने । ईक्षते ।

(१) नित्यत्वादुकारलोपात्पूर्वमाद् ।

ईषाञ्चक्रे। ईक्षाम्बभूव । ईक्षामास । ईष, गतिहिंसादर्शनेषु । ईषाञ्चक्रे। भाष, व्यक्तायां वाचि । भाषते । वर्ष, स्नेहने । वर्षते । ववर्षे। गेषृ, अन्विच्छायाम्। ग्लेषृ, इत्येके । गेषते । जिगेषे । ग्लेषते। जिग्लेषे । पेषृ, प्रयत्ने । पेषते । पिपेषे। पेषिषतै। पेषिषातै । जेषृ, णेषृ, एषृ, प्रेषृ, गतौ । जेषते । नेषते । एषते । एषाञ्चक्रे । प्रेषते । रेषृ, हेषृ, ह्रेषृ, अव्यक्ते शब्दे । रेषते । रिरेषे । हेषते। जिहेषे। ह्रेषते । जिह्रेषे। कासृ, शब्दकुत्सायाम् । कासते । कासाञ्चक्रे । भासृ, दीप्तौ । भासते । बभासे । णासृ, रासृ, शब्दे। नासते । प्रणासते । रासते । णस, कौटिल्ये। नसते। नेसे। भ्यस, भये । भ्यसते । बभ्यसे । आङः शसि, इच्छायाम् । आशंसते । आशशंसे । ग्रसु, ग्लसु, अदने । जग्रसे । जग्लसे । ईह, चेष्टायाम् । ईहाञ्चक्रे। बहि, महि, वृद्धौ । बंहते । बबंहे । मंहते । अहि, गतौ । अंहते । आनंहे । गर्ह, गल्ह, कुत्सायाम् । गर्हते । गल्हते । जगर्हे ।जगल्हे। बर्ह, बल्ह, प्राधान्ये । वर्ह, वल्ह, परिभाषणहिंसाच्छादनेषु । दन्त्योष्ठ्यादी । केचित्तु पूर्वयोर्दन्त्योष्ठ्यादितामनयोरोष्ठ्यादिताञ्चाहुः। प्लिह, गतौ। पिप्लिहे । वेहृ, जेहृ, बाहृ, प्रयत्ने । वेहते । जेहते । बाहते । बबाहे । द्राहृ, निद्राक्षये । निक्षेप इत्यन्ये । द्राहते । काशृ, दीप्तौ । काशते । चकाशे । ऊह, वितर्के । ऊहते । ऊहाञ्चक्रे । गाहू, विलोडने । गाहते । जगाहे । जगाहिषे । जघाक्षे । जगाहिढ्वे । जगाहिध्वे । जघाढ्वे । गाहिता ।

## ढो ढे लोपः ॥ ८ । ३ । १३ ॥

ढस्य लोपो ढे । गाढा । गाहिष्यते । घाक्ष्यते । गाहिषीष्ट ।

---

(१) अन्वेषण इत्यर्थः ।

(२) कास्प्रत्ययादित्याम् ।

घाक्षीष्ट । अगाहिष्ट । अगाढ । अघाक्षाताम् । अघाक्षत । अगाढाः । अघाढ्वम् । अघाक्षि । अगाहिष्यत । अघाक्ष्यत । गृहू, ग्रहणे । गर्हते । जगृहे । ( ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन ) जगृहिषे । जघृक्षे । जगृहिध्वे । जगृहिढ्वे । गर्हिता । गर्ढा । गर्हिष्यते । घर्क्ष्यते । गर्हिषतै । गर्हिषातै । घर्क्षतै । घर्क्षातै । गर्हतै । गर्हातै । गर्हताम् । अगर्हत । गर्हेत । गर्हिषीष्ट । घृक्षीष्ट । अगर्हिष्ट । अनिट्पक्षे ।

शल इगुपधादनिटः क्सः ॥ ३ । १ । ४५ ॥

इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः । अघृक्षत ।

क्सस्याचि ॥ ७ । ३ । ७२ ॥

अजादौ तङि क्सस्य लोपः । अघृक्षाताम् । अघृक्षन्त । अगर्हिष्यत । अघर्क्ष्यत । ग्लह, च । ग्लहते । जग्लहे । घुषि, कान्तिकरणे । घष इति केचित् । घुंषते । जुघुंषे । घुंषिता । घुंषिष्यते । घुंषिषतै । घुंषिषातै । घुंषताम् । अघुंषत । घुंषेत । घुंषिषीष्ट । अघुंषिष्ट । अघुंषिष्यत । इति घुक्षादय उदात्ता अनुदात्तेत आत्मनेभाषा द्विपञ्चाशत् समाप्ताः ।

अथ परस्मैपदिनः पञ्चनवतिः । घुषिर्, अविशब्दने । विशब्दनं प्रतिज्ञानम् । घोषति । जुघोष । अघुषत् । अघोषीत् । अघोषिष्यत् । अक्षू, व्याप्तौ ।

(१) झलोझलीति सलोपः । ढस्त्वधत्वष्टुत्वढलोपाः ।
(२) क्त्वात्परत्वात् "पुगन्त" इतिगुणे प्राप्तेऽस्माद्दृत्वाति'कात् कित्वे गुणाभावः ।
(३) धातोर्विशेषणात्तलाभः, येन विधिस्तदन्तस्येति ।

अक्षोऽन्यतरस्याम् ॥ ३ । १ । ७५ ॥

अक्षेः श्नुर्वा कर्त्रर्थे सार्वधातुके। पक्षे शप्। अक्ष्णोति। अक्ष्णुतः। अक्ष्णुवन्ति। अक्षति। अक्षतः। अक्षन्ति। आनक्ष। आनक्षिथ। इडभावपक्षे स्कोरिति कलोपे। आनष्ठ। अक्षिता। अष्टा। अक्षिष्यति। षढोः कसि। अक्ष्यति। अक्ष्णोतु। अक्ष्णुहि। अक्ष्णवानि। आक्ष्णोत्। आक्ष्णवम्। अक्ष्णुयात्। अक्ष्यात्। ऊदित्वादिट्, नेटि। मा भवानक्षीत्। आक्षिष्टाम्। अक्षिषुः। इडभावे तु माभवानाक्षीत्। आष्टाम्। आक्षुः। तक्षू, त्वक्षू, तनूकरणे।

तनूकरणे तक्षः ॥ ३ । १ । ७६ ॥

अस्मात्तनूकरणे श्नुर्वा शब्विषये। तक्ष्णोति। तक्षति। ततक्षिथ। ततष्ठ। अतक्षीत्। अताक्षीत्। अताष्टाम्। तनूकरणे किम्। वाग्भिः सन्तक्षति। भर्त्सयतीत्यर्थः। त्वक्षति। तत्वक्ष। उक्ष, सेचने। उक्षति। उक्षाञ्चकार। औक्षीत्। रक्ष, पालने। णिक्ष, चुम्बने। तृक्ष, स्तृक्ष, णक्ष, गतौ। तृक्षति। स्तृक्षति। नक्षति। वक्ष, रोषे। सङ्घात इत्यन्ये। मृक्ष, संघाते। म्रक्ष, इत्येके। तक्ष, त्वचने। त्वचनं संवरणम्, त्वचो ग्रहणञ्च। पक्ष, परिग्रह इत्येके। सूर्क्ष, आदरे। सुसूर्क्ष। काक्षि, वाक्षि, माक्षि, काङ्क्षायाम्। द्राक्षि, ध्राक्षि, ध्वाक्षि, घोरवाशिते च। चूष, पाने। चुचूष। तूष, तुष्टौ। तूषति। तुतूष। पूष, वृद्धौ। मूष, स्तेये। लूष, रूष, भूषायाम्। शूष, प्रसवे। प्रसवोऽभ्यनुज्ञानम्। यूष, हिंसायाम्। जूष, च। भूष, अलङ्कारे। भूषति। ऊष, रुजायाम्। ऊषाञ्चकार। ईष,

(१)-घोरवाशितं घोरशब्दः।

उञ्छे । कष, खष, शिष, जष, झष, शष, वष, मष, रुष, रिष, हिंसार्थाः । कषति । चकाष । चखाष । शिशेष । शिशेषिथ । शेष्टा । अशिक्षत् । अशेक्ष्यत् । जेषतुः । जझषतुः । शेषतुः । ववषतुः । मेषतुः ।

तीषसहलुभरुषरिषः ॥ ७ । २ । ४८ ॥

इच्छत्यादेः परस्य तादेरार्द्धधातुकस्येड् वा । रोषिता । रोष्टा । रोषिष्यति । रेषिता । रेष्टा । रेषिष्यति । भष, भर्त्सने[1] । भषति । बभाष । उष, दाहे । ओषति ।

उषविदजागृभ्योऽन्यतरस्याम् ॥ ३ । १ । ३८ ॥

एभ्यो लिटि आम्वा । ओषाञ्चकार । उवोष । ऊषतुः । उवोषिथ । औषीत् । औषिष्यत् । जिषु, विषु, मिषु, सेचने, । जेषति । जिजेष । वेषति । विवेष । विवेषिथ । विविषिव । वेष्टा । वेक्ष्यति । अविक्षत् । पुष, पुष्टौ । पोषति । पुपोष । पोषिता । पोषिष्यति । पोषिषति । पोषिषाति । पोषतु । अपोषत् । पोषेत् । पुष्यात् । अपोषीत्[2] । अपोषिष्यत् । श्रिषु, श्लिषु, प्रुषु, प्लुषु, दाहे । श्रेषति । शिश्रेष । श्रेषिता । श्लेषति । शिश्लेष । श्लेषिता । पुप्रोष । पुप्लोष । पृषु, वृषु, मृषु, सेचने । मृषु, सहने च । इतरौ हिंसासंक्लेशनयोश्च । पर्षति । पपर्ष । पृष्यात् । घृषु, संघर्षे । हृषु, अलीके । तुस, ह्रस, ह्लस, रस, शब्दे । तुतोस । जह्रास । जह्लास । ररास । लस, श्लेषणक्रीडनयोः ।

(१)–तिरस्कारः इति भर्त्सनं स्वरवः ।

(२)–'पुगन्त–' इति गुणः। अभ्यासस्यासवर्णे इत्युवङ् (३)–अनिट्केषु पुष्येति श्यना निर्देशादयं सेट् । अतो न क्सः । अङ्विधौ दैवादिकस्य ग्रहणान्नाङ् ।

घस्लृ, अदने । अयन्न सार्वत्रिकः । लिट्यन्यतरस्यामित्यदेर्घस्लादेश-विधानात् । ततश्च यत्र लिङ्गं वचनं वा तत्रैवास्यप्रयोगः (१)।

सः स्यार्द्धधातुके ॥ ७ । ४ । ४९ ॥

सादावार्द्धधातुके धातोः सस्य तः । घत्स्यति । घसतु । अघसत् । घसेत् ।

पुषादिद्युताद्यॢदितः परस्मैपदेषु ॥ ३ । १ । ५५ ॥

एभ्यश्च्लेरङ् परस्मैपदे परे । अघसत् । अघत्स्यत् । जर्ज, चर्च, झर्झ, परिभाषणहिंसातर्जनेषु । पिस्लृ, पेस्लृ, गतौ । पेसति । पिपेस । पिपिसतुः । पिपेसतुः । हसे, हसने । हसति । एदित्वा न्नवृद्धिः । अहसीत् । णिश, समाधौ । नेशति । मिश, मश, शब्दे रोषकृते च । शव, गतौ । शवति । शशाव । शेवतुः । अशावीत् । अशवीत् । अशविष्यत् । शश, प्लुतगतौ । शशति । शशाश । शेशतुः । शेशुः । शेशिथ । शसु, हिंसायाम् । शसति । शशास । शशसतुः । नशसददेत्येत्वं न । शंसु, स्तुतौ । दुर्गतावपीति दुर्गः । शंसति । शशंस । शंस्यात् । अशंसीत् । चह, परिकल्कने । कल्कनं शाठ्यम् । चहति । चचाह । चेहतुः । चेहुः । अचहीत् । मह, पूजायाम् । महति । मेहतुः । अमहीत् । रह, त्यागे । रहति । रहि, गतौ । रंहति । ररंह । रंह्यात् । दृह, दृहि, बृह, बृहि, वृद्धौ । दर्हति । ददर्ह । ददृहतुः । दृंहति । बृंहति । बृहि, शब्दे च । बृंहति । बृहिर्, इत्येके । अबृहत् ।

(१)-अत्रैव पाठः शपि परस्मैपदे लिङ्गम् । ऌदित्करणादङि । अनिट्कारिकासु पाठा त्वार्धधातुके । यमरचिंतु त्रिशिष्योपादानम् । एवं चाशीलिङि लिटि चास्याप्रयोगः।

(२)-बृंहितं करिगर्जितम् ।

अवर्हीत् । तुहिर्, दुहिर्, उहिर्, अर्दने । तोहति । तुतोह । अतुहत् । अतोहीत् । अदुहत् । अदोहीत् । ओहति । उवोह । ऊहतुः । मा भवानुहत् । औहीत् । अर्ह, पूजायाम् । अर्हति । आनर्ह । आर्हीत् । आर्हिष्यत् । इति घुषिरादय उदात्ता उदात्तेतः परस्मैपदिनः समाप्ताः ।

अथ क्रृपूपर्यन्ताः षड्विंशतिरात्मनेपदिनः । द्युत, दीप्तौ । द्योतते

द्युतिस्वाप्योः सम्प्रसारणम् ॥ ७ । ४ । ६७ ॥

एतयोरभ्यासस्य सम्प्रसारणम् ।

सम्प्रसारणाच्च ॥ ६ । १ । १०८ ॥

सम्प्रसारणादचि पूर्वरूपमेकादेशः । दिद्युते । दिद्युताते । द्योतिता । द्योतिषीष्ट ।

द्युद्भ्यो लुङि ॥ १ । ३ । ९१ ॥

द्युतादिभ्यो लुङः परस्मैपदम्वा । पुषादिसूत्रेण परस्मैपदेऽङ् । अद्युतत् । अद्योतिष्ट । श्विता, वर्णे । श्वेतते । शिश्विते । अश्वितत् । अश्वेतिष्ट । ञिमिदा, स्नेहने । मेदते ।

मिदेर्गुणः ॥ ७ । ३ । ८२ ॥

मिदेरिको गुणः इत्संज्ञकशकारादौ प्रत्यये परे । एश आदिशित्वाभावान्नानेन गुणः । मिमिदे । अमिदत् । अमेदिष्ट । ञिष्विदा, स्नेहनमोचनयोः । अश्विदत् । अश्वेदिष्ट । ञिक्ष्विदा, इत्येके ।

( १ )--अनिड्धातुष्वस्य दुहेर्ग्रहणम् ।

अक्ष्विदत् । अक्ष्वेदिष्ट । रुच, दीप्तावभिप्रीतौच । अरुचत् । अरोचिष्ट । घुट, परिवर्तने । अघुटत् । अघोटिष्ट । रुट, लुट, लुठ, प्रतीघाते । अरुटत् । अरोटिष्ट । अलुठत् । अलोटिष्ट । शुभ, दीप्तौ । शोभते । शुशुभे । अशुभत् । अशोभिष्ट । क्षुभ, संचलने । क्षोभते । चुक्षुभे । अक्षुभत । अक्षोभिष्ट । णभ, तुभ, हिंसायाम् । अनभत् अनभिष्ट, स्रंसु, ध्वंसु, भ्रंसु, अवस्रंसने । ध्वंसु, गतौ च । अस्रसत् । अस्रंसिष्ट । अध्वसत् । अध्वंसिष्ट । अभ्रसत् । अभ्रंसिष्ट । भ्रशु, भ्रंशु, अधःपतने । स्रम्भु, विश्वासे । अस्रभत् । अस्रम्भिष्ट । वृतु, वर्तने । वर्तते । ववृते ।

## वृद्भ्यः स्यसनोः ॥ १ । ३ । ९२ ॥

वृतादिभ्यः पञ्चभ्यः परस्मैपदं वा स्ये सनि च ।

## न वृद्भ्यश्चतुर्भ्यः ॥ ७ । २ । ५९ ॥

वृतादिभ्यश्चतुर्भ्यः सादेरार्द्धधातुकस्येण्न, परस्मैपदविषये । वर्त्स्यति । वर्तिष्यते । अवृतत् । अवर्तिष्ट । अवर्त्स्यत् । अवर्तिष्यत । वृधु, वृद्धौ । शृधु, शब्दकुत्सायाम् । इमौ वृतुवत् । स्यन्दू, प्रस्रवणे । स्यन्दते । सस्यन्दे । सस्यन्दाते । सस्यन्दिरे । सस्यन्त्से । सस्यन्दिध्वे । सस्यन्ध्वे । स्यन्दिता । स्यन्ता । स्यन्त्स्यति[2] । स्यन्दिष्यते । स्यन्त्स्यते । स्यन्दिषीष्ट । स्यन्त्सीष्ट । "वृद्भ्यो लुङी" ति परस्मैपद-

---

(१) अयमभावेपि । नमन्तामन्यके समे । माभूवन्नान्यके सर्वे । इति निरुक्तम् ।

(२) "निषेधाश्च बलीयांसः" इति परिभाषया नेड्विकल्पः । चतुर्ग्रहणं च स्पष्टार्थं मेवेतितु परिभाषेन्दुशेखरे नागोजिभट्टाः ।

पक्षेऽङ् । नलोपः । अस्यदत् । अस्यन्दिष्ट । अस्यन्त । अस्यन्त्साताम् । अस्यन्त्सत । अस्यन्त्स्यत । अस्यन्दिष्यत ।

अनुविपर्य्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥ ८ । ३ । ७२ ॥

एभ्यः पञ्चभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा । अनुष्यन्दते । अनुस्यन्दते वा, जलम् । अप्राणिषु किम् । अनुस्यन्दते । हस्ती । अप्राणिष्विति पर्युदासान्मत्स्योदके अनुष्यन्देते इत्यत्रापि पक्षे षत्वं भवत्येव । प्राणिषु नेत्युक्तौ तु न स्यात् । कृपू, सामर्थ्ये ।

कृपो रो लः ॥ ८ । २ । १८ ॥

कृप उ इति छेदः, कृपेति लुप्तषष्ठीकम् । तच्चावर्त्तते । कृपो यो रेफस्तस्य लत्वम् । कृपेर्ऋकारस्यावयवो यो रेफसदृशस्तस्य च लृकारसदृशः । कल्पते । चक्लृपे । चक्लृपिषे । चक्लृप्से । स्यन्दिवत् ।

लुटि च क्लृपः ॥ १ । ३ । ९३ ॥

लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा ।

तासि च क्लृपः ॥ ७ । २ । ६० ॥

क्लृपेः परस्य तासेः सकारादेरार्द्धधातुकस्य चेण्न तङानयोरभावे । कल्प्ता । कल्प्तासि । कल्प्तास्थ । कल्पितासे । कल्प्तासे । कल्प्स्यति । कल्पिष्यते । कल्प्स्यते । कल्पिषीष्ट । क्लृप्सीष्ट, अक्लृपत् । अकल्पिष्ट । अक्लृप्त । अकल्प्स्यत् । अकल्पिष्यत । अकल्प्स्यत । वृतु । सम्पूर्णो वृतादिर्द्युतादिश्च । अथ त्वरत्यन्ता आत्मनेपदिनः । घट, चेष्टायाम् ।

घटते । जघटे । अघटिष्ट । अघटिष्यत । व्यथ,भयसंचलनयोः । व्यथते ।

व्यथो लिटि ॥ ७ । ४ । ६८ ॥

व्यथोऽभ्यासस्य सम्प्रसारणं लिटि । विव्यथे । विव्यथाते । विव्यथिरे । प्रथ,प्रख्याने । प्रथते । पप्रथे । अप्रथिष्ट । प्रस,विस्तारे । प्रसते । पप्रसे । म्रद,मर्दने । म्रदते । मम्रदे । स्खद,स्खदने । स्खदते । चस्खदे । क्षजि,गतिदानयोः । क्षञ्जते । चक्षञ्जे । दक्ष,गतिहिंसनयोः दक्षते । ददक्षे । क्रप,कृपायां गतौ च । क्रपते । चक्रपे । कदि, क्रदि,क्लदि,वैक्लव्ये । वैकल्य इत्यन्ये । कन्दते । चकन्दे । कद, क्रद,क्लद,इत्यन्ये । कदते । क्रदते । क्लदते । ञित्वरा,संभ्रमे । त्वरते । तत्वरे इति घटादयः षितः[2] उदात्ता अनुदात्तेत आत्मनेभाषाः षोडश समाप्ताः ॥ अथ फणान्ताः परस्मैपदिनः । ज्वर,रोगे । ज्वरति । जज्वार । गड,सेचने । गडति । जगाड । हेड,वेष्टने । हेडति । जिहेड । वट,भट,परिभाषणे । वटति । भटति । बभाट । णट,नृत्तौ । नटति । ननाट । ष्टक,प्रतीघाते । स्तकति । तस्ताक । चक,तृप्तौ । चकति । चचाक । कखे,हसने । रगे,शङ्कायाम् । रगति । लगे,सङ्गे । ह्लगे,ह्रगे, षगे, ष्टगे, सम्वरणे । कगे,नोच्यते । अस्यायमर्थ इति विशिष्य नोच्यते । क्रियासामान्यार्थत्वात् । अनेकार्थत्वादित्यन्ये । अक,अग, कुटिलायां गतौ । कण,रण,गतौ । चकाण । रराण । चन,शण,श्रण, दाने च । शण,गतावित्यन्ये । श्रथ,श्लथ,क्नथ,क्लथ,हिंसार्थाः । वन च । हिंसायामितिशेषः । वनु,च नोच्यते । ज्वल,दीप्तौ । ह्वल,ह्मल,सञ्चलने । ह्वलति । ह्मलति । [1]स्मृ,आध्याने । दॄ,भये । नॄ,नये । क्र्यादिषु पठिष्यमा-

१ पूर्वं पठितस्य मित्वार्थोऽनुवादः । २षित्वादङ् कृत्सु वक्ष्यते ।

णस्यानुवादः । नयादन्यत्र नारयति । श्रा,पाके । श्रै इति कृतात्वस्य श्राइत्यादादिकस्य च सामान्येनानुकरणम्[1] । मारणतोषणनिशाम[2]नेषु ज्ञा,एष्वर्थेषु ज्ञाधातुर्मित् नान्यत्र । अयं धातुः क्र्यादिगणस्य । चलिः,कम्पने । छदिः, ऊर्जने । अयं चुरादौ पठिष्यमाणः । जिह्वोन्मथने लडिः,अयमपि चुरादेः । मदी,हर्षग्लेपनयोः । अयं दिवादेः । ध्वन, शब्दे । अयमस्मिन्नेव गणे पठिष्यते । दलि,वलि,स्खलि,रणि,ध्वनि, त्रपि, क्षपयश्चेति भोजः । तत्र ध्वनिरणी उदाहृतौ । दल, विशरणे । वल, सम्वरणे । स्खल,सञ्चलने । त्रपूष्,लज्जायामिति गताः । तेषां णौ दलयतीत्यादि । क्षै,क्षये इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः । क्षपयति । स्वन,अवतंसने[3] । शब्दे इति पठिष्यमाणस्यानुवादः । स्वनयति । अन्यत्र स्वानयति । घटादयो मितः । मित्संज्ञका इत्यर्थः । जनी,जॄष्,क्नसु,रञ्जोऽमन्ताश्च । मित इत्यनुवर्तते । ज्वलह्वलह्मलनमामनुपसर्गाद्वा ॥ एषां वा मित्वम् । ज्वलयति । ज्वालयति । ग्लास्नावनुवमाञ्च ॥ अनुपसर्गादेषां वा मित्वम् । न कम्यमिचमाम् ॥ अमन्तत्वात्प्राप्तं मित्त्वं निषिध्यते । कामयते । आमयति । चामयति । शमो दर्शने ॥ मित्स्यात् । निशामयति रूपम् । यमोऽपरिवेषणे । यच्छतिर्भोजनातोऽन्यत्र मित्स्यात् । आयामयति-व्यापारयतीत्यर्थः । अन्यत्र यमयति ब्राह्मणान् । भोजयतीत्यर्थः । स्खदिरवपरिभ्याञ्च ॥ मित्स्यात् । अवस्खादयति । परिस्खादयति । फण,गतौ । फणति । पफाण ।

फणाञ्च सप्तानाम् ॥ ६ । ४ । १२५ ॥

किति लिटि, सेटि थलि च एषामेत्वाभ्यासलोपौ वा । फेणतुः ।

---

१ लुग्विकरणेति,लक्षणप्रतिपदोक्तेतिपरिभाषाभ्याम् । २ निशामनं चाक्षुषज्ञानमिति माधवः । ज्ञापनमात्रमित्यन्ये,ज्ञापनञ्च मारणादिकम् ।

३ अवतंसनं भूषणम् ।

फेणुः । फेणिथ । पफणतुः । पफणुः । फाणयति । ( वृत् ) घटादयः समाप्ताः । फणेः प्रागेव वृदित्येके । तन्मते-फाणयतीत्यादि । राजृ,दीप्तौ । उदात्तः स्वरितेत् । राजति । राजते । रेजतुः । रराजतुः । रेजे । रराजे । राजिष्यति । राजिष्यते । टुभ्राजृ,टुभ्राशृ,टुभ्लाशृ,दीप्तौ । उदात्ता अनुदात्तेत आत्मनेपदिनः । भ्राजते । भ्रेजे । बभ्राजे । भ्राजितासे । वाभ्राशेति श्यन्वा । भ्राश्यते । भ्राशते । भ्रेशे । बभ्राशे । भ्लाश्यते । भ्लाशते । भ्लेशे । बभ्लाशे ।

अथ स्यमादयः परस्मैपदिनः षड्विंशतिः । स्यमु,स्वन,ध्वन, शब्दे । स्यमति । सस्याम । स्येमतुः । सस्यमतुः । अस्यमीत् । स्वेनतुः । सस्वनतुः । अस्वानीत् । अस्वनीत् । फणादयः सप्त समाप्ताः । ध्वनति । दध्वान । दध्वनतुः । अध्वानीत् । अध्वनीत् । अध्वनिष्यत् । षम,ष्टम,अवैकल्ये । समति । तस्ताम । ज्वल,दीप्तौ । ज्वलति । जज्वाल । अज्वालीत् । चल,कम्पने । चलति । चचाल । जल, घातने । घातनं तैक्ष्ण्यम् । टल, ट्वल, वैक्लव्ये । ष्ठल,स्थाने । स्थलति । हल,विलेखने । जहाल । अहालीत् । णल,गन्धे । बन्धनइत्येके । नलति । ननाल । नेलतुः । अनालीत् । पल,गतौ । पलति । बल, प्राणने धान्यावरोधे च । बलति । बबाल । बेलतुः । बेलुः । पुल,महत्वे । पोलति । कुल,संस्त्याने बन्धुषु च । संस्त्यानं संघातः । बन्धुशब्देन तद्व्यापारो गृह्यते । कोलति । चुकोल । शल,हुल,पत्ल,गतौ । शशाल । जुहोल । पपात । पेततुः । पतिता ।

पतः पुम् ॥ ७ । ४ । १९ ॥

पतः पुमागमोऽङि परे । अपप्तत् । क्वथे,निष्पाके । क्वथति ।

(१) वैक्लव्यं भयादिजनितोद्विग्नता ।

(२) धान्यानां कुसूलादावेकीकरणव्यापारे ।

चकाथ । अकथीत् । पथे,गतौ । अपथीत् । मथे,विलोडने । मेथतुः । अमथीत् । टुवम,उद्गिरणे । वमति । ववाम । ववमतुः । वादित्वादेत्वाभ्यासलोपौ न । अवमीत् । अवमिष्यत् । भ्रमु,चलने । वाभ्राशेति श्यन्वा । भ्राम्यति । भ्रमति ।

वा जॄभ्रमुत्रसाम् ॥ ६ । ४ । १२४ ॥

एषामेत्वाभ्यासलोपौ वा किति लिटि, सेटि थलि च । भ्रेमतुः । बभ्रमतुः । अभ्रमीत् । क्षर,संचलने । अक्षारीत् । इति स्यमादय उदात्ता उदात्तेतः समाप्ताः

अथ द्वावनुदात्तेतौ । षह,मर्षणे । सहते । परिषहते । सेहे । सहन्ते । सेहे । सेहाते । सहिता । तीषसहेति वा इट् । इडभावे ढत्वधत्वष्टुत्वढलोपाः ।

सहिवहोरोदवर्णस्य ॥ ६ । ३ ।११२ ॥

अनयोरवर्णस्य ओड्ढलोपे सति ।

सोढः ॥ ८ । ३ । ११५ ॥

सोढ्रूपस्य सहेः सस्य षत्वन्न । परिसोढा ।

सिवादीनां वाऽड्व्यवायेपि ॥ ८ । ३ । ७१ ॥

परिनिविभ्यः परेषां सिवादीनां सस्य षो वाऽड्व्यवायेऽपि । पर्य्यसहत । पर्यषहत । रमु,क्रीडायाम् । रेमे । रेमिषे । रन्ता । रंस्यते । रंसीष्ट । अरंस्त । अरंसाताम् । अरंस्यत ॥ अथ कसन्ताः सप्त परस्मैपदिनः । षद्लृ,विशरणगत्यवसादनेषु ।

**(१)पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥ ७ । ३ । ७८ ॥**

इत्संज्ञकशकारादौ प्रत्यये यथासंख्यं पादीनां पिबादयः । सीदति । ससाद । सेदतुः । सेदिथ[२] ।ससत्थ । सत्ता । सत्स्यति । लृदित्वादङ् । असदत् । असत्स्यत् । सदिरप्रतेः । निषीदति । न्यषीदत् ।

**सदेः परस्य लिटि ॥ ८ । ३ । ११८ ॥**

सदेरभ्यासात्परस्य षत्वन्न लिटि । निषसाद । निषेदतुः । शदॢ,शातने ।

**शदेः शितः ॥ १ । ३ । ६० ॥**

शिद्भाविनोऽस्मात्तङानौ । शीयते । शशाद । शेदतुः । शेदुः । शेदिथ । शशत्थ । शत्ता । शत्स्यति । अशदत् । क्रुश,आह्वाने रोदने च । क्रोशति । चुक्रोश । व्रश्चेति षत्वे ष्टुत्वे च । क्रोष्टा । क्रोक्ष्यति । शलः कसः[३] । अक्रुक्षत् । कुच,संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । कोचति । चुकोच । बुध,अवगमने । बोधति । बुबोध । बोधिता । बोधिष्यति । रुह,बीजजन्मनिप्रादुर्भावे च । रोहति । रुरोह । रुरुहतुः । रुरुहुः । रोढा । रोक्ष्यति । अरुक्षत् । कस,गतौ । कसति । चकास । अकसीत् । अकासीत् । ( वृत् ) ज्वलादिगणः समाप्तः ।

---

(१) लुग्विकरणपरिभाषया 'पा रक्षणे' इत्यस्य ग्रहणं न ।

(२) भारद्वाजनियमादिट्पक्षे "थलिचसेटि" इत्येत्वाभ्यासलोपौ ।

(३) षढोः कः सीति कत्वम् ।

अथ गुहूत्यन्ताः स्वरितेतो ऽष्टत्रिंशत् । हिक्क,अव्यक्तेशब्दे । हिक्कति । हिक्कते । अञ्चु,गतौ याचने च । अञ्चति । अञ्चते । आनञ्च । आनञ्चे । अच्यात् । अंचु,इत्येके । अचि,इत्यपरे । अञ्च्यात् । डुयाचृ,याच्ञायाम् । याचति । याचते । रेटृ,परिभाषणे । रेटति । रेटते । चते,चदे,याचने । चतति । चेते । अचतीत् । चदति । चेदे । अचदीत् । प्रोथृ,पर्य्याप्तौ । प्रोथति । प्रोथते । मिदृ,मेदृ,मेधाहिंसनयोः । मेदति । मिमेद । मिमिदे । मिमेदे । मिधृ,मेधृ,सङ्गमे च । मेधति । मेधते । मिथृ,मेथृ,मेधाहिंसनयोरित्येके । णिदृ,णेदृ,कुत्सासन्निकर्षयोः । नेदति । नेदते । निनेद । निनिदे । शृधु,मृधु,उन्दने । शर्धति । शर्धते । मर्धति । मर्धते । बुधिर्,बोधने । बोधति । बोधते । अबुधत् । अबोधीत् । अबोधिष्ट । उबुन्दिर्,निशामने । निशामनं ज्ञानम् । बुन्दति । बुन्दते । अबुदत् । अबुन्दीत् । वेणृ,गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वेणति । वेणते । वेनृ, इत्येके । वेनति । वेनते । खनु, अवदारणे । खनति । खनते । चखान । गमहनेत्युपधालोपः । चख्नतुः । ये विभाषा । खायात् । खन्यात् । चीवृ, आदानसम्वरणयोः । चीवति । चीवते । चिचीव । चिचीवे । चायृ, पूजानिशामनयोः । चायति । चायते । चचाय । चचाये ।

चायः की ॥ ६ । १ । ३५ ॥

चायः की बहुलं वेदे । चिक्ये । चिकाय । चिक्यतुः । चिक्युः । बहुलग्रहणात्क्वचिन्न । चिचाय । व्यय, गतौ । अव्ययीत् । दाशृ,

( १ )–पूर्वत्र गताविति पाठः क्रियाफलस्य कर्तृगामित्वे परस्मैपदार्थः ।

( २ )–दीपजनेति चिण् तु न । तत्र साहचर्येण देवादिकस्यैव ग्रहणात् ।

दाने। ददाश। ददाशे। भेषृ, भये। गतावित्येके। भेषति। भेषते। भ्रेषृ, भ्लेषृ, गतौ। भ्रेषति। भ्रेषते। असु, गतिदीप्त्यादानेषु। असति। असते। आस। आसे। अष, इत्येके। स्पश, बाधनस्पर्शनयोः। स्पर्शनं ग्रन्थनम्। स्पशति। स्पशते। पस्पाश। पस्पशे। अस्पशिष्ट। अस्पाशीत्। अस्पशीत्। लष, कान्तौ। वाभ्राशेति श्यन्वा। लष्यति। लषति। ललाष। लेषे। चष, भक्षणे। छष, हिंसायाम्। छषति। छषते। चच्छषतुः। चच्छषे। झष, आदानसंवरणयोः। भ्रक्ष, भ्लक्ष, अदने। भक्ष, इत्येके। भक्षति। भक्षते। दासृ, दाने। दासति। दासते। माहृ, माने। गुहू, सम्वरणे।

ऊदुपधाया गोहः ॥ ६। ४। ८६ ॥

गुणनिमित्तेऽजादौ प्रत्यये गुह उपधाया ऊत्। गूहति। गूहते। ऊदित्त्वादिड् वा। गूहिता। गोढा। गूहिष्यति। घोक्ष्यति। गूहेत्। गुह्यात्। अगूहीत्। इडभावे क्सः। अघुक्षत्।

लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥ ७। ३। ७३ ॥

एषां क्सस्य लुग्वा दन्त्ये तङि। ढत्वधत्वष्टुत्वढलोपदीर्घाः। अगूढ। अघुक्षत। अघुक्षाताम्। अघुक्षन्त। अगुह्वहि। अघुक्षावहि। अघुक्षामहि। इति हिक्कादय उदात्ताः स्वरितेदुभयतोभाषाः समाप्ताः।

अथाजन्ता उभयपदिनः पञ्च। श्रिञ्, सेवायाम्। श्रयति। श्रयते। शिश्राय। शिश्रिये। श्रयिष्यति। श्रयिष्यते। श्रायिषाति। श्रायिषाति। श्रयाति। श्रयाति। श्रायिषतै। श्रायिषातै। श्रयंतु।

(१)—ताविति वक्तव्ये दन्त्यग्रहणस्य दन्त्योष्ठ्यस्यापि परिग्रहार्थत्वाद् 'अगुह्वहि' इत्यत्रापि लुग् भवति।

श्रयताम् । श्रीयात् । अशिश्रियत् । भृञ्, भरणे । भरति । भरते । बभार । बभ्रतुः । बभ्रुः । बभर्थ । बभ्रथुः । बभ्र । बभार । बभर । बभृव । बभृम । बभ्रे । भर्ता । भर्त्तासि । भर्त्तासे ।

ऋद्धनोः स्ये ॥ ७ । २ । ७० ॥

ऋतो हन्तेश्च स्यस्येट् । भरिष्यति । भरिष्यते । भार्षति । भार्षाति । भरति । भराति । भार्षतै । भार्षातै । भरतु । भरताम् । अभरत् । अभरत । भरेत् । भरेत ।

रिङ्शयग्लिङ्क्षु ॥ ७ । ४ । २८ ॥

ऋतो रिङ् शे यकि यादावार्द्धधातुके लिङि च । अकृदिति दीर्घो न, रीङि प्रकृते रिङ्विधानसामर्थ्यात् । भ्रियात् ।

उश्च ॥ १ । २ । १२ ॥

ऋवर्णान्तात्परौ झलादी लिङ् तङ्परः सिच्चेत्येतौ कितौ । भृषीष्ट । भृषीयास्ताम् । भृषीरन् । अभार्षीत् । अभार्ष्टाम् । अभार्षुः ।

ह्रस्वादङ्गात् ॥ ८ । २ । २७ ॥

सिचो लोपो झलि । अभृत । अभृषाताम् । अभरिष्यत् । अभरिष्यत । हृञ्, हरणे । हरणं प्रापणं स्वीकारः स्तेयं नाशनञ्च । हरति । हरते । जहर्थ । जह्रिव । जह्रिषे । हर्ता । हरिष्यति । धृञ्, धारणे । धरति । धरते । अधार्षीत् । अधृत । णीञ्, प्रापणे । नयति । नयते । निनाय । निन्ये । नेता । नेष्यति । नेष्यते । अनैषीत् । अनेष्ट । अनेष्यत् । अनेष्यत । भरत्यादयश्चत्वारोऽनुदात्ताः । अथ धेटादयो-

जयत्यन्ताः षट्चत्वारिंशत्परस्मैभाषाः ॥ धेट्, पाने । धयति । धयतः । धयन्ति ।

आदेच उपदेशेऽशिति ॥ ६ । १ । ४५ ॥

उपदेशे एजन्तस्य धातोरात्वं न तु शिति ॥

आत औ णलः ॥ ७ । १ । ३४ ॥

आदन्ताद्धातो र्णल औकारादेशः । दधौ ।

आतो लोप इटि च ॥ ६ । ४ । ६४ ॥

अजाद्योरार्द्धधातुकयोः क्ङिदिटोः परयो रातो लोपः । द्वित्वात्परत्वाल्लोपे प्राप्ते—

द्विर्वचनेऽचि ॥ १ । १ । ५९ ॥

द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये । द्वित्वे कृते आल्लोपः । दधतुः । दधुः । दधिथ । दधाथ । दधथुः । दध । दधौ । दधिव । दधिम । धाता । धास्यति । धासति । धास्राति । धयति । धयाति । धयतु । अधयत् । धयेत् ।

दाधा घ्वदाप् ॥ १ । १ । २० ॥

दाप्दैपौ वर्जयित्वा दारूपा धारूपाश्च धातवो घुसंज्ञकाः ।

एर्लिङि ॥ ६ । ६ । ६७ ॥

घुसंज्ञकानां मास्थादीनाञ्च एत्वमार्द्धधातुके किति लिङि । धेयात् । धेयास्ताम् । धेयासुः ।

(१)-अन्यत्र क्ङित्यजादावार्द्धधातुकेऽआतो लोप इत्याल्लोपः ।

### विभाषा धेट्श्व्योः ॥ ३ । १ । ४९ ॥

आभ्यां च्लेश्चङ् वा कर्त्रर्थे लुङि । अदधत् । अदधताम् । अदधन् ।

### विभाषा घ्राधेट्शाच्छासः ॥ २ । ४ । ७८ ॥

एभ्यः सिचो लुग्वा परस्मैपदे । अधात् । अधाताम् ।

### आतः ॥ ३ । ४ । ११० ॥

सिज्लुकि आदन्तादेव झेर्जुस् । अधुः ।

### यमरमनमातां सक्च ॥ ७ । २ । ७३ ॥

एषां सक् एभ्यः सिच इट् परस्मैपदेषु । अधासीत् । अधासिष्टाम् । अधासिषुः । अधास्यत् । ग्लै, म्लै, हर्षक्षये । हर्षक्षयो धातुक्षयः । ग्लायति । जग्लौ । जग्लिथ । जग्लाथ ।

### वाऽन्यस्य संयोगादेः ॥ ६ । ४ । ६८ ॥

घुमास्थादेरन्यस्य संयोगादेर्धातो रात एत्वं वाऽऽर्धधातुके किति लिङि । ग्लायात् । ग्लेयात् । अग्लासीत् । म्लायतीत्यादि । द्यै, न्यक्करणे । न्यक्करणं तिरस्कारः । द्रै, स्वप्ने । ध्रै, तृप्तौ । ध्यै, चिन्तायाम् । रै, शब्दे । स्त्यै, ष्ट्यै, शब्दसंघातयोः । षोपदेशस्यापि रूपं तुल्यम् । तत्फलन्तु तिष्ट्यासतीत्यादिषु षत्वम् । खै, खदने । क्षै, जै, षै (१) क्षये । क्षायति । चक्षौ । जायति । जजौ । सायति । ससौ । कै, गै, शब्दे । कायति । गायति । गेयात् । अगासीत् । शै, श्रै, पाके । शायति । श्रायति । पै, ओवै, शोषणे । पायति । पायात् ।

(१) घुमास्थेत्यत्र विभाषाघ्राधेडित्यत्र चस्यतेरेव व्याख्यानादग्रहणेन नेत्वसिज्लुकौ ।

अपासीत् । वायति । ववौ । वायात् । अवासीत् । ष्टै, वेष्टने । स्तायति । तस्तौ । स्तेयात् । स्तायात् । अस्तासीत् । ष्णै, वेष्टने । शोभायाञ्चेत्येके । शौच, इत्यन्ये । स्नायति । सस्नौ । अस्नासीत् । अस्नास्यत् । दैप्, शोधने । दायति । घुत्वाभावादेत्वसिज्लुकौ न । दायात् । अदासीत् । पा, पाने । पाघ्राध्मेति पिबादेशः । पिबादेशोऽदन्तस्तेन न गुणः । पिबति । पेयात् । अपात् । घ्रा, गन्धोपादाने । जिघ्रति । घ्रायात् । घ्रेयात् । अघ्रासीत् । अघ्रात् । ध्मा, शब्दाग्निसंयोगयोः । धमति । दध्मौ । ष्ठा, गतिनिवृत्तौ । तिष्ठति । अस्थात् । अस्थास्यत् । म्ना, अभ्यासे । मनति । दाण्, दाने । यच्छति । देयात् । अदात् । ह्वृ, कौटिल्ये । ह्वरति ।

ऋतश्च संयोगादे र्गुणः ॥ ७ । ४ । १० ॥

ऋदन्तस्य संयोगादेरङ्गस्य गुणो लिटि । किदर्थमपीदं परत्वाण्णल्यपि । रपरत्वम् । उपधावृद्धिः । जह्वार । जह्वरतुः । जह्वरुः । जह्वर्थ । ह्वर्ता । ऋद्धनोः स्ये । ह्वरिष्यति । ह्वार्षति । ह्वार्षाति । ह्वर्षति । ह्वर्षाति ।

गुणोऽर्तिसंयोगाद्योः ७॥ । ४ । २९ ॥

अर्तेः संयोगादेर्ऋदन्तस्य च गुणो यकि यादावार्द्धधातुके लिङि च । ह्वर्यात् । अह्वार्षीत् । अह्वार्ष्टाम् । अह्वार्षुः । अह्वरिष्यत् । स्वृ, शब्दोपतापयोः । स्वरति । सस्वार । स्वरतिसूतीति वेट् । सस्वरिथ । सस्वर्थ । वमयोस्तु ।

(१) गातिस्थेति सिचोनलुक्, पारूपस्य लाक्षणिकत्वात् ।

## श्र्युकः किति ॥ ७ । २ । ११ ॥

श्रिञ एकाच उगन्ताच्च परयोर्गित्किरतोरिण्न । परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सस्वरिव । सस्वरिम । परत्वादृद्धनोरितिनित्यमिट् । स्वरिष्यति । स्वर्यात् । अस्वारीत् । अस्वारिष्टाम् । अस्वार्षीत् । अस्वार्ष्टाम् । स्मृ, चिन्तायाम् । वृ, संवरणे । स्रृ, गतौ । क्रादित्वान्नेट् । ससर्थ । सस्रुव । रिङ । स्रियात् । असार्षीत् । असार्ष्टामित्यादि ।

## सर्तिशास्त्यर्तिभ्यश्च ॥ ३ । १ । ५६ ॥

एभ्यश्च्लेरङ् कर्तरि लुङि । इत्यङ् तु न । लुग्विकरणेन शासिना साहचर्यात् सर्त्यर्त्योर्जौहोत्यादिकयोरेव ग्रहणात् । शीघ्रगतौ तु पाघ्राध्मेति धौरादेशः । धावति । ऋ,गतिप्रापणयोः । ऋच्छति ।

## ऋच्छत्यॄताम् ॥ ७ । ४ । ११ ॥

तौदादिक ऋच्छे र्ऋधातो ॠताञ्च गुणो लिटि । उपधावृद्धिः । आर । आरतुः । आरुः ।

## इडत्यर्तिव्ययतीनाम् ॥ ७ । २ । ६६ ॥

अद्, ऋ, व्येञ्, एभ्यस्थलो नित्यमिट् । आरिथ । अर्ता । अरिष्यति[2] । आर्षति । आर्षाति । अर्षति । अर्षाति । अर्यात् । आर्षीत् । आर्ष्टाम् । गृ, घृ, सेचने । गरति । जगार । जगर्थ । जग्रिव ।

(१) पाघ्रेत्यादिना ऋच्छादेशः ।

(२) 'ऋद्धनोःस्ये' इतीट् ।

रिङ् । ग्रियात् । अगार्षीत् । घ्वृ, हूर्छने[1] । स्रु, गतौ । स्रवति । स्रूयात् । णिश्रीति चङ् । लघूपधगुणादन्तरङ्गत्वादुवङ् । असुस्रुवत् । षु, प्रसवैश्वर्ययोः । सवति । सुषाव । सुषोथ । सुषविथ । सुषुविव । सोता ।

## स्तुसुधूञ्भ्यः परस्मैपदेषु ॥ ७ । २ । ७२॥

एभ्यः सिच इट् परस्मैपदेषु । असावीत् । पूर्वोत्तराभ्यां ञिद्भ्यां साहचर्य्यात्सुनोतेरेवग्रहणमितिपक्षे-असौषीत् । श्रु, श्रवणे ।

## श्रुवः शृ च ॥ ३ । १ । ७४ ॥

श्रुवः शृ इत्ययमादेशः श्नुप्रत्ययश्च शब्विषये । शपोऽपवादः श्नोर्ङित्त्वा द्धातोर्गुणो न । शृणोति । शृणुतः ।

## हुश्नुवोः सार्वधातुके ॥ ६ । ४ । ८७ ॥

जुहोतेःश्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्यचासंयोगपूर्वस्य यणजादौ सार्वधातुके । उवङोऽपवादः । शृण्वन्ति । शृणोमि । शृण्वः । शृणुवः । शृण्मः । शृणुमः । शुश्राव । शुश्रोथ । शुश्रुव । शृणु । शृणवानि । शृणुयात् । श्रूयात् । अश्रौषीत् । ध्रु, स्थैर्ये । ध्रवति । अयं कुटादौ गत्यर्थोऽपि । दु, द्रु, गतौ । दवति । द्रवति । दुदाव । दुदोथ । दुदविथ । दुदविव । दुद्रोथ । दुद्रुव । णिश्रीति चङ् । अदुद्रुवत् । जि, ज्रि, अभिभवे । अभिभवो न्यूनीकरणं न्यूनीभवनञ्च । जयति । जीयात् । अजैषीत् । इति घेटादयोऽनुदात्ता उदात्तेतः परस्मैपदिनः षट्चत्वारिंशत् समाप्ताः ।

---

(१) हूर्छनं कौटिल्यं, हिंसायामपि दृश्यते ।

अथ डीङन्ता ङितस्त्रयोविंशतिः। ष्मिङ्, ईषद्धसने। स्मयते। सिष्मिये। सिष्मियिढ्वे। सिष्मियिध्वे। गुङ्, अव्यक्ते शब्दे। गवते। जुगुवे। गाङ्, गतौ। गाते। गाते। गाते। गासे। गाथे। गाध्वे। इट एत्वे वृद्धिः। गै। गावहे। गामहे। जगे। लङ इटि। अगे। गेत। गेयाताम्। गेरन्। गासीष्ट। अगास्त। अगास्यत। कुङ्, घुङ्, उङ्, ङुङ्, शब्दे। अन्ये तु उङ्, कुङ्, खुङ्, गुङ्, घुङ्, ङुङ्, इत्याहुः। कवते। चुकुवे। घवते। जुघुवे। अवते। ऊवे। ऊविढ्वे। ऊविध्वे। वार्णादाङ्गं बलीयः। इत्युवङ्, ततः सवर्णदीर्घः। ओता। ओष्यते। ओषीष्ट। औष्ट। ङवते। ङुङुवे। ङोता। ङोष्यते। ङोषतै। ङोषातै। च्युङ्, ज्युङ्, प्रुङ्, प्लुङ्, गतौ। क्लुङ्, इत्येके। रुङ्, गतिरेषणयोः। रेषणं हिंसा। रुरुवे। रवितासे। धृङ्, अवध्वंसने। धरते। दध्रे। अधृत। मेङ्, प्रणिदाने। प्रणिदानं-विनिमयः, प्रत्यर्पणञ्च। मयते। ममेते। ममन्ते। देङ्, रक्षणे। दयते।

दयतेर्दिगि लिटि ॥ ७ । ४ । ९ ॥

लिटि दयतेर्दिग्यादेशः। दिग्ये।

स्थाघ्वोरिच्च ॥ १ । २ । १७ ॥

अनयोरिदादेशः सिच्च कित्सङि। अदित। अदिथाः। अदिषि। श्यैङ्, गतौ। श्यायते। शश्ये। प्यैङ्, वृद्धौ। प्यायते। पिप्ये। प्याता। अप्यास्त। अप्यास्यत। त्रैङ्, पालने। त्रायते। तत्रे। ष्मिङ्-

(१) गाङ्कुटादीति ङित्वन्तु न। इङो गाङादेशङकारस्याचारितार्थ्येन तस्यैव तत्र ग्रहणात्।

(२)-दिग्यादेशेन द्वित्वबाधनमिष्यत इति भाष्यसंमतम्।

प्रभृतयोऽनुदात्ता आत्मनेपदिनः। पूङ्,पवने। पवते। पुपुवे। पुपुविढ्वे। पुपुविध्वे। पविता। पविष्यते। मूङ्,बन्धने। मवते। डीङ्, विहायसागतौ[1]। डयते। डिड्ये। डयिता। तॄ,प्लवनसन्तरणयोः। उदात्तः परस्मैभाषः।

## ॠत इद्धातोः॥ ७। १। १००॥

ॠदन्तस्य धातोरङ्गस्य इत्। ( इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन ) तरति। ऋच्छत्यॄतामिति गुणः। तॄफलेत्येत्वम्। तेरतुः। तेरुः।

## वॄतो वा॥ ७। २। ३८॥

वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा न तु लिटि। तरिता। तरीता। हलिचेति दीर्घः। तीर्यात्।

## सिचि च परस्मैपदेषु॥ ७। २। ४०॥

अत्र वॄत इटो दीर्घो न परस्मैपदेषु। अतारीत्। अतारिष्टाम्। अतारिषुः। अतरीष्यत्। अतरिष्यत्। अथाष्टावनुदात्तेतः। गुप[2], गोपने। तिज, निशाने। मान, पूजायाम्। बध, बन्धने।

## गुप्तिज्किद्भ्यः सन्॥ ३। १। ५॥

एभ्यः सन्।

---

( १ )-आकाशगमन इति यावत्।

( २ )-गुपिप्रभृतयः कितूभिन्नानिन्दाद्यर्थकाश्चानुदात्तेतो, दानशानौ चस्वरितेतौ। एतेसन्नन्ताः। अर्थान्तरेऽननुबन्धकाश्चुरादयः। अनुबन्धस्यकेवलेऽचरितार्थत्वात्सन्नन्तात्तङ्। धातुशब्दमुच्चार्याविहितत्वात्सनोऽत्रनार्धधातुकत्वम्, तेनेड्गुणौ न।

मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ३ । १ । ६ ॥

एभ्यः सन्नभ्यासस्य दीर्घश्च । सनाद्यन्ता इति धातुत्वम् ।

सन्यङोः ॥ ६ । १ । ९ ॥

सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेर्द्वितीयस्य । अभ्यासकार्य्यम् । जुगुप्सते । जुगुप्साञ्चक्रे । जुगुप्सांबभूव । जुगुप्सामास । जुगुप्सितासे । जुगुप्सिष्यते । जुगुप्सिषतै । जुगुप्सिषातै । एवं तितिक्षते । मीमांसते । भष्भावश्चर्त्वम् । बीभत्सते । रभ, राभस्ये । रभते । रेभे । रब्धा । रप्स्यते । राप्सतै । राप्सातै । रभताम् । अरभत । रभेत । रप्सीष्ट । अरब्ध । अरप्स्यत । डुलभष्, प्राप्तौ । लभते । लेभे । ष्वञ्ज, परिष्वङ्गे ।

दंशसञ्जस्वञ्जां शपि ॥ ६ । ४ । २५ ॥

शपि दंशादीनामुपधाया नस्य लोपः ।

रञ्जेश्च ॥ ६ । ४ । २६ ॥

नस्य लोपः शपि । स्वजते । (श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वेति व्याकरणान्तरम्) सस्वजे । सस्वञ्जे । सदेः परस्य लिटीति सूत्रे (स्वञ्जेरुपसंख्यानम्) अभ्यासात्परस्य प्राप्तं षत्वं निवार्य्यते । परिषस्वजे । स्वङ्क्ता । स्वङ्क्ष्यते । स्वजेत । स्वङ्क्षीष्ट । प्रत्यष्वङ्क्त । प्राक्सितादड्व्यवायेऽपीति षत्वम् । परिनिविभ्यस्तुसिवादीनांवेति विकल्पः । पर्य्यष्वङ्क्त । पर्यस्वङ्क्त । हदं, पुरीषो-

(१)-अतएकेतिसूत्रे देभतुः, सदेः परस्येतिसूत्रे सस्वजे इति च, भाष्ये उदाहृतम् । एकदेशानुमत्या भाष्यकारस्यै तत्संमतमिति ।

(२)-एनंविभाषाऽनुदात्ते तमाहुः केचित ।

त्सर्गे । ह्रदते । जह्रदे । ह्रत्ता । ह्रत्स्यते । ह्रात्सतै । ह्रात्सातै । ह्रदताम् । अह्रदत । ह्रदेत । ह्रत्सीष्ट । अह्रत्त । अह्रत्स्यत । इति रभादयश्चत्वारोऽनुदात्ता अनुदात्तेत आत्मनेभाषाः समाप्ताः ॥

अथ परस्मैपदिनः पञ्चदश । ञिष्विदा, अव्यक्ते शब्दे । स्वेदतीत्यादि । स्कन्दिर्, गतिशोषणयोः । स्कन्दति । चस्कन्द । चस्कन्दिथ । झरो झरीति दलोपः । चस्कन्थ । स्कन्ता । स्कन्त्स्यति । नलोपः । स्कद्यात् । इरितो वेत्यङ् वा । अस्कदत् । अस्कान्त्सीत् । अस्कान्ताम् । अस्कान्त्सुः ।

वेः स्कन्देरनिष्ठायाम् ॥ ८ । ३ । ७३ ॥

षत्वं वा । कृत्येवायं विकल्पोऽनिष्ठायामिति पर्य्युदासो नञिव युक्तन्यायेन । विष्कन्त्ता । विस्कन्त्ता । निष्ठायान्तु विस्कन्नः ।

परेश्च ॥ ८ । ३ । ७४ ॥

अस्मात्परस्य स्कन्देः सस्य षो वा । पृथग्योगकरणान्निष्ठायामिति नानुवर्तत इति काशिका । तेन परिष्कण्णः । परिस्कन्नः । षत्वपक्षे णत्वम् । यभ, मैथुने । यभति । ययाभ । येभिथ । ययब्ध । यब्धा । यप्स्यति । णम, प्रह्वत्वे शब्दे च । नेमिथ । ननन्थ । नन्ता । अनंसीत् । अनंसिष्टाम् । गम्लृ, सृप्लृ, गतौ ।

इषुगमियमां छः ॥ ७ । ३ । ७७ ॥

एषां छः स्याच्छिति । गच्छति । जगाम । जग्मतुः । जग्मुः । जगमिथ । जगन्थ । गन्ता ।

(१)—पदद्वयाश्रयतया बहिरङ्गत्वात् षत्वस्यासिद्धत्वं न वाच्यम् । धातूपसर्गयोः कार्य्यमन्तरङ्गमित्यभ्युपगमात् । पूर्वं धातुरुपसर्गेण युज्यते ततः साधनेनेति भाष्यम् । पूर्वं साधनेनेति मतान्तरे तु न णत्वम् ।

## गमेरिट् परस्मैपदेषु ॥ ७ । २ । ५८ ॥

गमेः परस्य सादेरार्द्धधातुकस्येट् परस्मैपदेषु । गमिष्यति । गच्छति । गच्छाति । गच्छत् । गच्छात् । गच्छतु । अगच्छत् । लृदित्वादङ् । गमहनेत्युपधालोपस्तु न । अनङीतिपर्य्युदासात् । अगमत् । सर्पति । ससर्प ।

## अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम् ॥ ६ । १ । ५९ ॥

झलादावकिति प्रत्यये ऽुपदेशेऽनुदात्तो यो ऋदुपधस्तस्याम्वा । स्रप्ता । सर्प्ता । स्रप्स्यति । सर्प्स्यति । असृपत् । यम, उपरमे । यच्छति । ययाम । येमतुः । येमुः । येमिथ । ययन्थ । यन्ता । अयंसीत् । अयंस्यत् । तप, सन्तापे । तपति । तप्ता । अताप्सीत् ।

## निसस्तपतावनासेवने ॥ ८ । ३ । १०२ ॥

आसेवनं पौनःपुन्यं ततोऽन्यदनासेवनम् । तस्मिन्विषये षः स्यात् । निष्टपति । त्यज, हानौ । त्यजति । तत्याज । तत्यजिथ । तत्यक्थ ।

## अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः

## श्रितमाशीराशीर्त्ताः ॥ ६ । १ । ३६ ॥

एते निपात्यन्ते वेदे । स्पर्धेर्लङि आथाम् । इन्द्रश्च विष्णो यदपस्पृधेथाम्[२] ।

(२)–द्विर्वचनं रेफस्य सम्प्रसारणमलोपश्च निपातनात् । अस्पर्धेथामिति भाषायाम् । अन्ये तु अपपूर्वस्यस्पर्धेर्लङ्याथामि सम्प्रसारणमलोपश्च निपातनात् । बहुलंछन्दस्यमाङ्योगेऽपि, इत्यडागमाभावः । तन्मते प्रत्युदाहरणमपास्पर्धेथामिति भाषायाम् ।

अकमानृचुः । वसून्यानृहुः । अर्चेरर्हेश्चालिट्यपि । चिच्युषे । च्युङो लिटि थासि । यस्तित्याज । त्यजेर्णलि । आतेस्त इन्द्रसोमाः । श्रितानांग्रहाः । श्रीञ्पाकेनिष्ठायाम् । आशीरंदुहे । मध्यतआशीर्तिः श्रीञ एव क्विपि निष्ठायाञ्च । त्यक्ता । त्यक्ष्यति । त्यजतु । अत्यजत् । त्यजेत् । त्यज्यात् । अत्याक्षीत् । अत्यक्ष्यत् । षञ्ज, सङ्गे । दंशसञ्जेत्यनुनासिकलोपः । ससञ्ज । सङ्क्ता । सङ्क्ष्यति । सजतु । असजत् । सजेत् । आशिषि क्त्वाद्नुपधालोपे । सज्यात् । असाङ्क्षीत् । असंक्ष्यत् । दृशिर्, प्रेक्षणे । पश्यति । ददर्श ।

विभाषा सृजिदृशोः ॥ ७ । २ । ६५ ॥

आभ्यां थल इड्वा ।

सृजिदृशोर्झल्यमकिति ॥ ६ । १ । ५८ ॥

अनयोरमागमो झलादावकिति । दद्रष्ठ । ददर्शिथ । द्रष्टा । द्रक्ष्यति । दृश्यात् । इरितोवेतिअङ् वा ।

ऋदृशोऽङि गुणः ॥ ७ । ४ । १६ ॥

ऋवर्णान्तानां दृशेश्च गुणोऽङि । अदर्शत् । अङभावे ।

(१) सम्प्रसारणमलोपश्च निपातनात्ततो द्विर्वचनमुरदत्वम्, अतआदेरिति दीर्घत्वम् । तस्मान्नुड्द्विहलः, इति नुडागमः । आनचुः । आनहुरितिभाषायाम् ।

(२) अभ्यासस्य सम्प्रसारणमनित्वञ्च निपातनात् । चिच्युविषे इति भाषायाम् ।

(३) त्यज,वयोहानौ, अभ्यासस्य सम्प्रसारणं निपात्यते । तत्याजेति भाषायाम् ।

(४) श्रीञ् पाके इत्यस्य निष्ठायां श्राभावः ।

(५) तस्यैवश्रीणाते ह्रस्वत्वञ्च ।

(६) श्रीञ आङ्पूर्वस्य शिर इत्यादेशः । निष्ठायाञ्च नत्वाभावोनिपातनात् हलिचेदीर्घः ।

## न दृशः ॥ ३ । १ । ४७ ॥

दृशश्च्लेः क्सो न । अद्राक्षीत् । अदर्शत् । दंश, दशने । दशनं दंष्ट्राव्यापारः । दंशसञ्जेति अनुनासिकलोपः । दशति । ददंशिथ । ददंष्ठ । दंष्टा । दङ्क्ष्यति । दश्यात् । अदाङ्क्षीत् । कृष, विलेखने । विलेखनमाकर्षणम् । कर्षति । चकर्ष । क्रष्टा । कर्ष्टा । क्रक्ष्यति । कर्क्ष्यति । ( स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः ) अक्राक्षीत् । अक्राष्टाम् । अकार्क्षीत् । अकार्ष्टाम् । पक्षे क्सः । अकृक्षत् । अकर्क्ष्यत् । दह, भस्मीकरणे । ददाह । देहिथ । ददग्ध । दग्धा । धक्ष्यति । अधाक्षीत् । मिह, सेचने । मेहति । मिमेहिथ । मेढा । मेक्ष्यति । मेक्षति । मेक्षाति । मेहति । मेहाति । मेहतु । अमेहत् । मिह्यात् । अमिक्षत् । अमेक्ष्यत् । इति स्कन्दादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः ॥ कित, निवासे रोगापनयने च । अयमुदात्तेत् । चिकित्सति । निवासे तु केतयति । इतो वक्ष्यन्ताः स्वरितेतः । दान, खण्डने । शान, तेजने । आभ्यां सन्, अभ्यासस्य दीर्घो द्वित्वे च । दीदांसते । दीदांसति । शीशांसते । शीशांसतीत्यादि । अर्थविशेषे सन् । अन्यत्र दानयति । डुपचष्, पाके । पचति । पचते । पपाच । पेचिथ । पपक्थ । पेचे । पक्ता । पक्तासि । पक्तासे । पक्ष्यति । पक्ष्यते । पाचतै । पाक्षातै । पचतै । पचातै । पाक्षति । पाक्षाति । पचति । पचाति । पचतु । पचताम् । अपचत् । अपचत । पचेत् । पचेत । पच्यात् । पक्षीष्ट । अपाक्षीत् । अपक्त । अपक्ष्यत् । अपक्ष्यत । षच, समवाये । सचति । सचते । अयं सेट् । भज, सेवायाम् । भजति । भजते । बभाज । भेजतुः । भेजिथ । बभक्थ । भक्ता । भक्ष्यति । भक्ष्यते । भक्षीष्ट । अभाक्षीत् । अभक्त । अभक्ष्यत् । रञ्ज,

(१) स्वामिद्दासौपचत इत्यत्र दासधर्मस्य स्वामिन्यारोपात् परस्मैपदम् पचेते इत्यत्र स्वामिधर्मस्य समारोपात्तङ् इति कैय्यटादेः स्पष्टम् ।

रागे। रञ्जेश्चेति नलोपः। रजति। रजते। अराङ्क्षीत्। अरङ्क्त। शप, आक्रोशे। आक्रोशो विरुद्धानुध्यानम्। शपति। शपते। शशाप। शेपे। शप्तासि। शप्तासे। अशाप्सीत्। अशप्त। त्विष, दीप्तौ। त्वेषति। त्वेषते। तित्वेष। तित्विषे। त्वेक्ष्यति। त्विक्षीष्ट। अत्विक्षत्। यज, देवपूजासंगतिकरणदानेषु। यजति। यजते।

लिट्यभ्यासस्योभयेषाम्॥ ६। १। १७॥

लिटि वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणम्। इयाज।

वचिस्वपियजादीनां किति॥ ६। १। १५॥

वचिस्वप्योर्यजादीनाञ्च सम्प्रसारणं किति। पुनः प्रसङ्गविज्ञानाद् द्वित्वम्। ईजतुः। ईजुः। इयजिथ। इयष्ठ। ईजथुः। ईज। इयाज। इयज। ईजिव। ईजिम। ईजे। यष्टा। यक्ष्यति। यक्ष्यते। याक्षति। याक्षाति। यजति। यजाति। याक्षतै। याक्षातै। यजतै। यजातै। यजतु। यजताम्। अयजत्। अयजत। यजेत्। यजेत। इज्यात्। यक्षीष्ट। अयाक्षीत्। अयष्ट। अयक्ष्यत्। अयक्ष्यत। डुवप्, बीजसन्ताने छेदने च। बीजसन्तानं क्षेत्रे विकिरणम्, गर्भाधानञ्च। वपति[1]। वपते। उवाप। ऊपे। वप्ता। उप्यात्। वप्सीष्ट। अवाप्सीत्। अवप्त। अवप्स्यत्। अवप्स्यत। वह, प्रापणे। वहति। वहते। उवाह। उवहिथ। सहिवहोरोदवर्णस्य। उवोढ। ऊहे। वोढा। वक्ष्यति। वक्ष्यते। वाक्षति। वाक्षाति। वक्षति। वक्षाति। वहति। वहाति। वाक्षतै। वाक्षातै। वक्षतै।

(१) प्रणिवपति इत्यत्र नेर्गदेति णत्वम्।

वच्यातै । वाच्यते । वाच्यातै । वच्यते । वक्षाते । वहतै । वहातै । उह्यात् । वक्षीष्ट । अवाक्षीत् । अवोढाम् । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवोढ्वम् । अवक्ष्यत् । अवक्ष्यत । इति पचादयोऽनुदात्ताः स्वरितेत उभयपदिनः॥ वस, निवासे । वसति । उवास ।

शासिवसिघसीनाञ्च ॥ ८ । ३ । ६० ॥

इणुकुभ्यां परस्यैषां सस्य षः। ऊषतुः । ऊषुः । उवसिथ । उवस्थ । वस्ता । सःस्यार्द्धधातुकेति सस्य तः । वत्स्यति । उष्यात् । अवात्सीत् । अवात्ताम् । अवत्स्यत् । वेञ्,तन्तुसन्ताने । वयति । वयते ।

वेञो वयिः ॥ २ । ४ । ४१ ॥

वेञोवयि र्वा लिटि । इकार उच्चारणार्थः । उवाय ।

ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ॥ ६ । १ । १६ ॥

एषां किति ङिति सम्प्रसारणम् ।:इति यकारस्य प्राप्ते ।

लिटि वयो यः ॥ ६ । १ । ३८ ॥

वयो यस्य सम्प्रसारणं न लिटि । ऊयतुः । ऊयुः ।

वश्चास्यान्यतरस्यां किति ॥ ६ । १ । ३९ ॥

किति लिटि वयो यस्य वो वा । ऊवतुः । ऊवुः । वयस्तासावभावात्थलि नित्यमिट् । उवयिथ । ऊवथुः । स्थानिवद्भावेन ञित्त्वात्तङ् । ऊये । ऊवे । वयादेशाभावे ।

## वेञः ॥ ६ । १ । ४० ॥

वेञो न सम्प्रसारणं लिटि । ववौ । ववतुः । ववुः । ववे । ववाते । वविरे । वातासि । वातासे । ऊयात् । वासीष्ट । अवासीत् । अवास्त । अवास्यत् । अवास्यत । व्येञ्, संवरणे । व्ययति । व्ययते ।

## न व्यो लिटि ॥ ६ । १ । ४६ ॥

व्येञ आत्वं न लिटि । विव्याय । विव्यतुः । विव्युः । इडत्त्यर्तीति नित्यमिट् । विव्ययिथ । विव्याय । विव्यय । विव्ये । व्याता । व्यातासि । व्यातासे । वीयात् । व्यासीष्ट । अव्यासीत् । अव्यास्त । ह्वेञ्, स्पर्द्धायां शब्दे च । ह्वयति । ह्वयते ।

## अभ्यस्तस्य च ॥ ६ । १ । ३३ ॥

अभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणम् । ततोद्वित्वम् । जुहाव जुहविथ । जुहोथ । जुहुवे । ह्वाता । ह्वास्यति । ह्वास्यते । ह्वासति । ह्वासाति । ह्वयति । ह्वयाति । ह्वासतै । ह्वासातै । ह्वयतै । ह्वयातै । हूयात् । ह्वासीष्ट ।

## लिपिसिचिह्वश्च ॥ ३ । १ । ५३ ॥

एभ्यश्च्लेरङ् ।

## आत्मनेपदेष्वन्यतरस्याम् ॥ ३ । १ । ५४ ॥

एभ्यश्च्लेरङ्वाऽऽत्मनेपदे । आतोलोपः । अह्वत । अह्वत । अह्वास्यत् ।

(१)—परमपि हलादिः शेषं बाधित्वा यस्य सम्प्रसारणम् । उभयेषांग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां ग्रह्यादीनाञ्चानुवृत्त्यैव सिद्धे किं तेन ।

(२) कित्त्वात् सम्प्रसारणे हल इति दीर्घः ।

अह्वास्यत । वेञादय इदान्ता उभयपदिनः । अथ द्वौ परस्मैपदिनौ । वद, व्यक्तायां वाचि । वदति । उवाद । ऊदतुः । ऊवदिथ । वदिता । वदिष्यति । वादिषति । वादिषाति । वदाति । वदाति । उद्यात् । वदव्रजेति वृद्धिः । अवादीत् । अवदिष्यत् । टुओश्वि, । गतिवृद्ध्योः ।

विभाषा श्वेः ॥ ६ । १ । ३० ॥

श्वयतेः सम्प्रसारणं वा लिटि यङि च । शुशाव । शुशुवतुः । (श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः ) तेन लिट्यभ्यासस्योभयेषामिति सम्प्रसारणं न । शिश्वाय । शिश्वियतुः । श्वयिता । श्वयिष्यति । श्वायिषति । श्वायिषाति । श्वयति । श्वयाति । श्वयतु । अश्वयत् । श्वयेत् । शूयात् । जॄस्तम्भ्वित्यङ् वा ।

श्वयतेरः ॥ ७ । ४ । १८ ॥

अङि श्वयतेरिकारस्याऽकारः । पररूपम् । अश्वत् । अश्वताम् । अश्वन् । विभाषाधेट्श्व्योरिति चङ् । इयङ् । अशिश्वियत् । ह्म्यन्तेति न वृद्धिः । अश्वयीत् । अश्वयिष्यत् । वृत् । यजादयो वृत्ताः । भ्वादिस्त्वाकृतिगणः । तेन चुलुम्पतीत्यादिसंग्रहः ॥

॥ इति शब्विकरणा भ्वादयः ॥



# * अथ अदादिगणः *

ऋतेरीयङ् ॥ ३ । १ । २९ ॥

ऋतिः सौत्रो धातुः । तस्मादीयङ् स्वार्थे । जुगुप्सायामयं, कृपाया-ञ्चेत्येके । सनाद्यन्ता इति धातुत्वम् । शप् । ऋतीयते । ऋतीयाञ्चक्रे । आर्द्धधातुकविवक्षायामायादीनां वैकल्पिकत्वादीयङोऽभावे शेषा-त्कर्तरीति परस्मैपदम् । आनर्त । आनर्तिथ । ऋतीयितासे । अर्तिता । अर्तिष्यति । ऋतीयिष्यते । ऋतीयिषतै । ऋतीयिषातै । अर्तिषति । अर्तिषाति । ऋतीयताम् । आर्त्तीयत । ऋतीयेत । ऋतीयिषीष्ट । ऋत्यात् । आर्त्तीयिष्ट । आर्तीत् । आर्त्तिष्यत् । आर्त्तीयिष्यत् ।

अद, भक्षणे ।

अदिप्रभृतिभ्यः शपः ॥ २ । ४ । ७२ ॥

एभ्यः शपो लुक् । अत्ति । अत्तः । अदन्ति ।

बहुलं छन्दसि ॥ २ । ४ । ७३ ॥

छन्दसि बहुलं लुक् । अदति । हनतीत्यादि । अन्यस्मादपि भवति । त्राध्वं नो देवाः । त्रायध्वमितिलोके ।

लिटयन्यतरस्याम् ॥ २ । ४ । ४० ॥

अदो घस्लृ वा लिटि । जघास । गमहनेत्युपधालोपः । तस्य चार्वि-धिं प्रति स्थानिवद्भावनिषेधाद्घस्य चर्त्वम् । शासिवसीतिषत्वम् ।

जक्षतुः। जक्षुः। जघसिथ[1]। जक्षथुः। जक्ष। जघास। जघस। जक्षिव। जक्षिम। आद। इडत्त्यर्तीति नित्यमिट्। आदिथ। अत्ता। अत्स्यति। अत्सति। अत्साति। अदति। अदाति। अत्तु।

## हुझल्भ्यो हेर्धिः॥ ६। ४। १०१॥

होर्झलन्तेभ्यश्च हेर्धिः। अद्धि। अत्तात्। अदानि। अदाव। अदाम।

## अदः सर्वेषाम्॥ ७। ३। १००॥

अदः परस्यापृक्तसार्वधातुकस्याडागमः सर्वेषां मते। आदत्। आत्ताम्। आदन्। आदः। आत्तम्। आत्त। आदम्। आद्व। आद्म। अद्यात्। अद्याताम्। अद्युः। अद्यात्। अद्यास्ताम्। अद्यासुः।

## लुङ्सनोर्घस्लृ॥ २। ४। ३७॥

अदो घस्लृ लुङि सनि च। लृदित्त्वादङ्। अघसत्। आत्स्यत्। हन, हिंसागत्योः। हन्ति। प्रणिहन्ति।

## अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति॥ ६। ४। ३७॥

अनुनासिकेतिलुप्तषष्ठीकम्। अनुनासिकान्तानामेषां वनतितनोत्यादीनाञ्चानुनासिकलोपो झलि क्ङिति। यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाअनुनासिकान्ताः। तनु, षणु, क्षणु, क्षिणु, ऋणु, तृणु, घृणु, वनु, मनु, तनोत्यादयः। हतः। घ्नन्ति।

(१) घस्लादेशस्य तासावसत्त्वान्नित्यमिट्।

वमोर्वा ॥ ८ । ४ । २३ ॥

उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा वमयोःपरयोः। प्रहण्मि । प्रहन्मि । प्रहण्वः । प्रहन्वः । होहन्तेरितिकुत्वम् । जघान । जघ्नतुः । जघ्नुः ।

अभ्यासाच्च ॥ ७ । ३ । ५५ ॥

अभ्यासात्परस्य हन्तेर्हस्य कुत्वम् । जघनिथ । जघन्थ । हन्ता । ऋद्धनोरितीट् । हनिष्यति । हांसति । हांसाति । हंसति । हंसाति । हनाति । हनाति । हन्तु । हतात् । हताम् । घ्नन्तु ।

हन्तेर्जः ॥ ६ । ४ । ३६ ॥

हौ परे । हेर्लुक् न । आभीयतया जस्यासिद्धत्वात् । जहि । हतात् । हतम् । हत । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म । हन्यात् । हन्याताम् । हन्युः ।

आर्द्धधातुके ॥ २ । ४ । ३५ ॥

इत्यधिकृत्य ।

हनो वध लिङि ॥ २ । ४ । ४२ ॥

हनोवधादेशोलिङ्यार्द्धधातुके । वधादेशोऽदन्तः । आर्द्धधातुके, इतिविषयसप्तमी । अतोलोपः । वध्यात् । वध्यास्ताम् । वध्यासुः ।

लुङि च ॥ २ । ४ । ३६ ॥

आर्धातुडकविषये हनो वधादेशो लुङि परे । अवधीत् । अल्लोपस्य स्थानिवत्वादतोहलादेरिति न वृद्धिः । अहनिष्यत् । अदहनी अनुदा-

णावुदात्तेतौ परस्मैपदिनौ॥ अथ स्वरितेतः । द्विष, अप्रीतौ । द्वेष्टि । द्विष्टे । दिद्वेष । दिद्विषे । द्वेष्टासि । द्वेष्टासे । द्वेक्ष्यति । द्वेक्ष्यते । द्वेक्षति । द्वेक्षाति । द्वेषति । द्वेषाति । द्वेक्षतै । द्वेक्षातै । द्वेषतै । द्वेषातै । द्वेष्टु । द्विष्टाम् । द्विड्ढि । अद्वेट् । अद्विष्टाम् ।

द्विषश्च ॥ ३ । ४ । ११२ ॥

द्विषः परस्य लङो झेर्जुस् शाकटायनस्य मते । अद्विषुः । अद्विषन् । अद्विष्ट । द्विष्यात् । द्विषीत । द्विष्यात् । द्विक्षीष्ट । अद्विक्षत् । अद्विक्षत । अद्वेक्ष्यत् । अद्वेक्ष्यत । दुह, प्रपूरणे । दादेर्धातोरिति घः । दोग्धि । दुग्धः । दुहन्ति । धोक्षि । दुग्धः । दुग्ध । दोह्मि । दुह्वः । दुह्मः । दुग्धे । धुक्षे । दुदोह । दुदुहे । दोग्धा । धोक्ष्यति । धोक्ष्यते । धोक्षति । धोक्षाति । दोहति । दोहाति । धोक्षतै । धोक्षातै । दोहतै । दोहातै । दोग्धु । दुग्धि । दोहानि । धुक्ष्व । धुग्ध्वम् । दोहै । अधोक् । अदोहम् । अधुग्ध्वम् । अधुक्षत् । अधुक्षत । लुग्वा दुहदिहेतिपक्षे तथा सूर्ध्वं वहिषु लङ्वदपि । दिह, उपचये । देग्धि । दिग्धे । नेर्गदेति णत्वम् । प्रणिदेग्धि । लिह, आस्वादने । लेढि । लीढे । लिलेह । लिलिहे । लेढासि । लेढासे । लेक्ष्यति । लेक्ष्यते । लेक्षति । लेक्षाति । लेक्षतै । लेक्षातै । लेढु । लीढि । अलेट् । अलिक्षत् । अलिक्षत । अलीढ । अलिह्वहि । अलिक्षावहि । अलिह्महि । अलिक्षामहि । अलेक्ष्यत् । अलेक्ष्यत॥ चक्षिङ्, व्यक्तायां वाचि । अयं दर्शनेऽपि । इकारोऽनुदात्तो "ऽनुदात्तेतश्च हलादे" रिति युजर्थः । विचक्षणः प्रथयन् । विचक्षणोऽन्तोदात्तः । नुम् तु न; अन्तेइदित इतिव्याख्यानात् । ङकारस्तु अन्त्येदित्वव्याघातकत्वेन

(१)-गोःपादान्तइत्यतोऽन्तइत्यनुवर्तते नुम्विधायके सूत्रे ।

न चरितार्थः । चष्टे । चक्षाते । चक्षते । आर्द्धधातुके इत्यधिकृत्य ।

चक्षिङः ख्याञ् ॥ २ । ४ । ५४ ॥

आर्धधातुकविषये चक्षिङः ख्याञादेशः ।

वा लिटि ॥ २ । ४ । ५५ ॥

लिटि चक्षिङः ख्याञादेशो वा । प्राप्तविभाषेयम् । ( ख्शादि-र्वा )अत्रैवभाष्ये । ( असिद्धे (असिद्धकाण्डे ) शस्य यवचनं विभाषा ) ञित्वात्पदद्वयम् । चख्यौ । चख्ये । चक्शौ । चक्शे । चयोर्द्वितीया-इति तु न । चर्त्वस्य असिद्धत्वात् । चचक्षे । ख्याता । क्शाता ख्यास्यति । ख्यास्यते । क्शास्यति । क्शास्यते । ख्यासति । ख्यासाति । क्शासति । क्शासाति । ख्यासतै । ख्यासातै । क्शासतै । क्शासातै । चक्षतै । चक्षातै । चक्षते । चक्षाते । चष्टाम् । अचष्ट । चक्षीत । ख्यायात् । ख्येयात् । क्शायात् । क्शेयात् ।

अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ३ । १ । ५२ ॥

एभ्यश्च्लेरङ् । अख्यत् । अख्यत । अक्शासीत् । अक्शास्त । अख्यास्यत् । अक्शास्यत । अक्शास्यत् । ( वर्जनेक्शाञः प्रतिषेधः ) समचक्षिष्टेत्यादि । अथ पृच्यन्ता अनुदात्तेतश्चतुर्दश । ईर, गतौ कम्पने च । ईर्ते । ईराञ्चक्रे । ईरिता । ईरिष्यते । ईरिषतै । ईरिषातै । ईरतै । ईरातै । ईर्ताम् । ईर्ष्व । ईर्ध्वम् । ऐर्त । ईरीत । ईरिषीष्ट । ऐरिष्ट । ईड, स्तुतौ । ईट्टे ।

( १ )--एतद्वचनं णत्वप्रकरणानन्तरंबोध्यं, तेन पर्याख्यानमित्यत्र कृत्यचइतिणत्वं न।

ईशः से ॥ ७ । २ । ७७ ॥

ईडजनो र्ध्वे च ॥ ७ । २ । ७८ ॥

एषां सेध्वेशब्दयोः सार्वधातुकयोरिट् । योगविभागो वैचित्र्यार्थः[१] । ईडिषे । ईडिध्वे । ईडांचक्रे । एकदेशविकृतस्यानन्यत्वात् ईडिष्व । ईडिध्वम् । ऐट्ट । विकृतिग्रहणेन प्रकृतेरग्रहणात् । ऐड्वम् । ईश, ऐश्वर्ये । ईष्टे । ईशिषे । ईशिध्वे । ईशांचक्रे इत्यादि । आस, उपवेशने । आस्ते । दयायासश्चेत्याम् । आसाञ्चक्रे । आसिता । आसिष्यते । आसिषतै । आसिषातै । आस्ताम् । आस्त । आध्वम् । आसिष्ट । आङः शासु, इच्छायाम् । आशास्ते । आशासाते, आशासिष्ट । प्रायेणायमाङ्पूर्वः । तेन नमोवाकं प्रशास्महे, इत्यादिसिद्धम् । वस, आच्छादने । वस्ते । वसाते । वसते । वस्से । वध्वे । ववसे । वसिता । वसिष्यते । वासिषतै । वासिषातै । वसतै । वसातै । वस्ताम् । अवसिष्ट । अवसिष्यत । कसि, गतिशासनयोः । कंस्ते । कस, इत्यन्ये । कस्ते । चकसे । कश, इत्येके । व्रश्चेति षत्वं । कष्टे । कशाते । चकशे । कक्षे । कड्ढ्वे । णिसि, चुम्बने । निंस्ते । निनिंसे । निंसिषतै । निंसिषातै । निंस्ताम् । निंस्व । निन्ध्वम् । अनिंस्त । निंसीत । निंसिषीष्ट । अनिंसिष्यत । णिजि, शुद्धौ । निङ्क्ते । निङ्क्षे । निञ्जिता । शिजि, अव्यक्ते शब्दे । शिङ्क्ते । शिशिञ्जे । पिजि, वर्णे । पिङ्क्ते । सम्पर्चनइत्येके । उभयत्र, इत्यन्ये । अवयव इत्यपरे । अव्यक्ते शब्दे इतीतरे । पृजी, इत्येके । पृक्ते । वृजी, वर्जने । वृक्ते । ववृजे । वर्जिता । वर्जिष्यते । वर्जिषतै । वर्जिषातै । वृजतै । वृजातै । वृक्ताम् । वृक्ष्व । वृग्ध्वम् । अवृक्त ।

( १ )--ध्वे इत्यस्यपूर्वत्रापकर्षः, सइत्यस्योत्तरत्रानुवृत्तिरितिवैचित्र्यम् । ईडजनोर्ध्वेचेति भाष्यसम्मतः पाठः ।

वृजीत । वर्जिषीष्ट । अवर्जिष्ट । अवर्जिष्यत । पृची, सम्पर्चने । पृक्ते । पृचाते । षूङ्, प्राणिगर्भविमोचने । सूते । सुवाते । सुषुवे । सुषुविषे । सोता । सविता । सोष्यते । सविष्यते । साविषतै । साविषातै । सविषते । सविषाते इत्यादि । भूसुवोरिति गुणनिषेधः । सुवै । सोषीष्ट । सविषीष्ट । असविष्ट । असोष्ट । शीङ्, स्वप्ने ।

## शीङः सार्वधातुके गुणः ॥ ७ । ४ । २१ ॥

शीङो गुणः सार्वधातुके । क्ङितिचेत्यस्यापवादः । शेते । शयाते ।

## शीङो रुट् ॥ ७ । १ । ६ ॥

शीङः परस्य झादेशस्यातो रुडागमः । शेरते । शेषे । शेध्वे । शये । शेवहे । शेमहे । शिश्ये । शिश्यिध्वे । शयिता । शयिष्यते । शायिषतै । शायिषातै । शयिषीष्ट । अशयिष्ट । अशयिष्यत । अथ कौत्यन्ताः परस्मैपदिनः । ऊर्णुस्तूभयपदी । यु, मिश्रणे अमिश्रणे च ।

## उतो वृद्धिर्लुकि हलि ॥ ७ । ३ । ८९ ॥

हलादौ पिति सार्वधातुके लुग्विषये उकारस्य वृद्धिर्नत्वभ्यस्तस्य । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । युयुवतुः । युयुवुः । यविता । युयात् । यूयात् । अयावीत् । अयविष्यत् । रु, शब्दे ।

## तुरुस्तुशम्यमः सार्वधातुके ॥ ७ । ३ । ९५ ॥

एभ्यः परस्य हलादेः सार्वधातुकस्य तिङ ईड् वा । नाभ्यस्तस्ये-

( १ ) इहउतोवृद्धिर्न, भाष्ये-पिच्चङिन्न, ङिच्चपिन्नेतिव्याख्यानात् । विशेषविहितेनङित्वेनपित्त्वस्यबाधात् ।

( २ ) अयंलोपोऽगतिवृद्धिर्हिसास्विततिमाद्यवादयः । लुग्विकरणत्वंचास्य,यतोऽन्यवहिततिङ्ईडागमंविदधाति ।

त्यतोऽनुवृत्तिसम्भवेऽपि पुनः सार्वधातुकग्रहणमपिदर्थम्। रवीति। रौति। रुवीतः। उवङ्। रुतः। हलादेःकिम्। रुवन्ति। तिङःकिम्। शास्याति। रवीषि। रौषि। रुवीथः। रुथः। रुवीथ। रुथ। रवीमि। रौमि। रुवीमः। रुमः। रवीतु। रौतु। सार्वधातुके किम्। आशिषि-रूयात्। विध्यादौ तु रुयात्। रुवीयात्। अरावीत्। अरविष्यत्। तौतीत्यादि, रौतीत्यादिवदुदाहार्य्यम्। तौतेरनिट्त्वात्। तोता। तोष्यतीत्यादि। णु, स्तुतौ। नौति। नुनाव। नविता। इत्यादि यौतिवत्। टुक्षु, शब्दे। क्षौति। चुक्षाव। क्ष्णु, तेजने। क्ष्णौति। क्ष्णविता। ष्णु, प्रस्रवणे। स्नौति। सुष्णाव। स्नविता। ऊर्णुञ्, आच्छादने।

## ऊर्णोतेर्विभाषा ॥ ७। ३। ९० ॥

ऊर्णोने र्वा वृद्धिः हलादौ पिति सार्वधातुके। ऊर्णौति। ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णौषि। ऊर्णोषि। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते। (वाच्यऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्। आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात्)।

## न न्द्राः संयोगादयः ॥ ६। १। ३॥

अचः पराः संयोगादयो नदरा द्विर्वचना न। अजादेर्द्वितीयस्येति नुशब्दस्य द्विर्वचनम्। रेफस्य तु नन्द्राइति न भवति। नोपधोऽयम्। णत्वन्तु सांहितिकम्। तच्च द्विर्वचनेऽसिद्धमिति कृते द्विवचनेपूर्वस्य णत्वं परस्य तु व्यवधानान्न भवति। पूर्वत्रासिद्धीयमद्विर्वचनइत्येतदुभौसाभ्या सस्येतिलिङ्गान्न प्रवर्तते। ऊर्णुनाव। ऊर्णुनुवतुः। ऊर्णुनुवुः।

## विभाषो र्णोः ॥ १। २। ३॥

ऊर्णोतेः पर इडादिप्रत्ययो वा ङिद्वत्। ऊर्णुनुविथ। ऊर्णुनविथ।

ऊर्णुनुविषे। ऊर्णुनविषे। ऊर्णुविता। ऊर्णविता। ऊर्णुविष्यते। ऊर्णविष्यते। ऊर्णुविषति। ऊर्णुविषाति। ऊर्णुविषत्। ऊर्णुविषात्। ऊर्णाविषति। ऊर्णाविषाति। ऊर्णविषाति। ऊर्णविषाति। ऊर्णुवति। ऊर्णुवाति। ऊर्णुविषतै। ऊर्णुविषातै। ऊर्णुविषते। ऊर्णुविषाते। ऊर्णाविषातै। ऊर्णविषातै। ऊर्णौतु। ऊर्णोतु। ऊर्णवानि। ऊर्णुताम्।

## गुणोऽपृक्ते ॥ ७। ३। ९१ ॥

अपृक्ते हलादौ पिति सार्वधातुके ऊर्णोतेर्गुणः। वृद्ध्यपवादः। और्णोत्। और्णोः। और्णुत। ऊर्णुयात्। ऊर्णुवीत। और्णुवीत्। और्णुविष्टाम्।

## ऊर्णोतेर्विभाषा ॥ ७। २। ६ ॥

इडादौ परस्मैपदे सिचि वा वृद्धिः। पक्षे गुणः। और्णावीत्। और्णवीत्। और्णुविष्यत्। और्णविष्यत्। और्णुविष्यत। और्णविष्यत। द्यु, अभिगमने। द्यौति। दुद्याव। दुद्यविथ। दुद्योथ। द्योता। द्योष्यति। द्योषतीत्यादि। षु, प्रसवैश्वर्ययोः। प्रसवोऽभ्यनुज्ञानम्। सौति। सोता।

## स्तुसुधूञ्भ्यः परस्मैपदेषु ॥ ७। २। ७२ ॥

एभ्यः सिच इट् परस्मैपदेषु। असावीत्। कु, शब्दे। कौति। चुकाव। चुकविथ। चुकोथ। कोतेत्यादि। ष्टुञ्, स्तुतौ। स्तौति। स्तवीति। स्तुतः। स्तुवीतः। स्तुते। स्तुवीते। तुष्टाव। तुष्टोथ। स्तोतासि। स्तोतासे। स्तोष्यति। स्तोष्यते। स्तौषति। स्तौषाति। स्तोषति। स्तोषाति। स्तौषतै। स्तौषातै। स्तोषते। स्तोषाते। स्तुसुधूञ्भ्यइतीट्। अस्तावीत्। ब्रूञ्, व्यक्तायां वाचि।

ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ ३ । ४ । ८४ ॥

ब्रुवः परेषामादितः पञ्चानां परस्मैपदानां णलादयः पञ्च वा ब्रुवश्चाहादेशः । आह । आहतुः । आहुः ।

आहस्थः ॥ ८ । २ । ३५ ॥

आहो हस्य थो झलि । आत्थ । आहथुः ।

ब्रुव ईट् ॥ ७ । ३ । ९३ ॥

ब्रुवः परस्य हलादेः पितः सार्वधातुकस्य ईट् । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते ।

ब्रुवो वचिः ॥ २ । ४ । ५३ ॥

ब्रुवोवचिरार्द्धधातुकविषये । उवाच । ऊचतुः । ऊचुः । उवचिथ । उवक्थ । ऊचे । ऊचाते । ऊचिरे । वक्तासि । वक्तासे । वक्ष्यति । वक्ष्यते । वाक्षति । वाचाति । ब्रवति । ब्रवाति । वाचतै । वाचातै । वचते । वचाते । ब्रुवतै । ब्रुवातै । ब्रुवते । ब्रुवाते । ब्रवीतु । ब्रूतात् । ब्रवाणि । ब्रवै । ब्रूयात् । उच्यात् । अस्यतीत्यङ् ।

वच उम् ॥ ७ । ४ । २० ॥

अङि परे । अवोचत् । अवोचत । अवक्ष्यत् । अवक्ष्यत । आशिषि लिङि तु छन्दसि विशेषः ।

लिङ्याशिष्यङ् ॥ ३ । १ । ८६ ॥

धातोरङाशिषि लिङि ।

छन्दस्युभयथा ॥ ३ । ४ । ११७ ॥

छन्दस्युभयसञ्ज्ञे (१-स्थागागमिवचिवदिशकिरुहयः प्रयोजनम्) उपस्था+अङ्+यासु+मिप् । उपस्थेयम् । उपगा । उपगेयम् । गमेयम् । वोचेम । वदेयम् । शकेयम् । रुहेयम् । (दृशेरग्वक्तव्यः) दृशेयम् । अथ शास्त्यन्ताः परस्मैपदिनः । इङ् त्वात्मनेपदी । इण्, गतौ । एति । इतः ।

इणो यण् ॥ ६ । ४ । ८१ ॥

इणो यण् अजादौ प्रत्यये । इयङोऽपवादः । यन्ति । इयाय ।

दीर्घइणः किति ॥ ७ । ४ । ६९ ॥

इणोऽङ्गस्याभ्यासस्य दीर्घः किति लिटि । ईयतुः । ईयुः । इययिथ । इयेथ । एता । एष्यति । ऐषति । ऐषाति । एषति । एषाति । अयति । अयाति । एतु । इतात् । इहि । अयानि । ऐत् । आयन् । इयात् । ईयात् ।

एतेर्लिङि ॥ ७ । ४ । २४ ॥

उपसर्गात्परस्यैतेर्ह्रस्वो लिङि यादौ क्ङिति । उदियात् । समियात् । अन्वियात् । उभयत आश्रयणे नान्तादिवत् । अभीयात् । अणः किम् । समेयात् ।

इणोगालुङि ॥ २ । ४ । ४५ ॥

इणो गादेशो लुङि । गातिस्थेति सिचो लुक् । अगात् । अगाताम् । अगुः । इङ्, अध्ययने । नित्यमधिपूर्वः । अधीते । अधीयाते । अधीयते ।

(१) सार्वधातुकार्द्धधातुकरूपे ।

## गाङ् लिटि ॥ २ । ४ । ४९ ॥

इङो गाङादेशो लिटि विवक्षिते । अधिजगे । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अध्यैषतै । अध्यैषातै । अध्येषतै । अध्येषातै । अध्यैषत । अध्यैषाताम् । अध्येषत । अध्येषाते । अधीताम् । अध्ययै । अध्ययावहै । अध्ययामहै । आटि गुणायादेशयोरुपसर्गस्य यणादेशः । पूर्वं धातोरुपसर्गेण योगेऽपि गुणात्पूर्वमन्तरङ्गत्वेन सवर्णदीर्घो न । वार्णादाङ्गंबलीय इति गुणस्य बलीयस्त्वात् । अथवा । प्रत्ययः । णेरध्ययने वृत्तम्, इत्यादिनिर्देशान्न भविष्यति । अध्यैत । अध्यैयाताम् । अध्यैयत । झस्यादादेशः । अधीयीत । अधीयीयाताम् । अधीयीरन् । अधीयीध्वम् । अध्येषीष्ट ।

## विभाषा लुङ्लृङोः ॥ २ । ४ ५० ॥

इङो गाङादेशो वा लुङ्लृङोः परतः ।

## गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ १ । २ । १ ॥

'गाङादेशात्कुटादिभ्यश्च परे ञ्णिद्भिन्नाः प्रत्यया ङिद्वत् ।

## घुमास्थागापाजहातिसां हलि ॥ ६ । ४ । ६६ ॥

घुसंज्ञकानांमास्थादीनाञ्च ईद्धलादावार्धधातुके क्ङिति । अध्यगीष्ट । अध्यैष्ट । अध्यगीष्यत । अध्यैष्यत । इक, स्मरणे । अयमप्यधिपूर्वः । अधीगर्थदयेशामितिलिङ्गादन्यथाहीगर्थेत्येवब्रूयात् । इण्व-

(१) पूर्वंधातुः साधनेन ( कारकेण ) युज्यते, पश्चादुपसर्गेणेति 'सुट्कात्पूर्वं' इति सूत्रेभाष्ये सिद्धान्तित्वादितिभाव. ।

(२) अजादौ परत्वादियङि पश्चादाटि वृद्धावुपसर्गस्य यणादेशः । इत्यादिभावः ।

दिक इतिवचनात् । इणोयण्, इणोगालुङि, इत्यपि । अधियन्ति । अध्यगादित्यादि । वी, गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । जनो-जन्म, प्रजनो जन्मन । उपक्रमो, गर्भग्रहणं । वेति । वीतः । वियन्ति । वेषि । विवाय । विवयिथ । विवेथ । वेता । वेष्यति । वैषति । वैषाति । वेषति । वेषाति । वयति । वयाति । वेतु । अवेत् । अवियन् । अडागमे । सत्यनेकाच्त्वादृयणिति केचित् । अव्यन् । अवैषीत् । अवेष्यत् । अत्र प्रश्लिष्ट निर्देशात्, ई इत्यपि धातुमाहुः । एति । ईतः । इयन्ति । ईयात् । ईयाताम् । ऐषीदित्यादि । या, प्रापणे । प्रापणमिह गतिः । प्रणियाति । नेर्गदेति णत्वम् । यातः । यान्ति । ययौ । ययतुः । ययुः । ययिथ । ययाथ । याता । यासति । यासाति । यातु । अयात् । अयाताम् ।

लङः शाकटायनस्यैव ॥ ३ । ४ । १११ ॥

आतः परस्य लङः शाकटायनस्यैव मते झेर्जुस् । अयुः । अयान् । यायात् । अयासीत् । अयास्यत् । वा, गतिगन्धनयोः । गन्धनं-सूचनम् । वातीत्यादि । यातिवत् । भा दीप्तौ । ष्णा, शौचे । स्नाति । सस्नौ । श्रा, पाके । द्रा, कुत्सायां गतौ । प्सा, भक्षणे । पा, रक्षणे, पायास्ताम् । अपासीत् । अपास्यत् । रा, दाने । ला, आदाने । दाप्, लवने । प्रणिदाति । प्रनिदाति । दायात् । अदासीत् । ख्या, प्रकथने । अयं सार्वधातुक एव प्रयोक्तव्यः । सस्थानत्वं नमः ख्यात्रे-इतिवार्तिकं तद्भाष्यञ्चेह लिङ्गम् । सस्थानोजिह्वामूलीयः । स इह नेति । ख्यात्रादेशस्य खशादित्वे प्रयोजनमित्यर्थः । ख्याति । ख्येयात् । ख्यायात् । प्रा, पूरणे । प्राति । प्रेयात् । प्रायात् । अप्रासीत् ।

(१) केचित्तु 'इणोगा लुङि' इत्यतिदेशकार्यार्थमेव 'इण्वदिक' इत्यतिदेशमिच्छन्ति तन्मतेऽध्यङि अधीयन्तीति पक्षान्तरमाह मैत्रेयः ।

मा, माने। माति। घुप्रकृतिमाङिति भाष्ये पाठात्, नेर्गदेत्यत्र नास्य ग्रहणम्। ममौ। ममिथ। ममाथ। अमात्। मेयात्। अमासीत्। अमास्यत्। वच, परिभाषणे। वक्ति। वक्तः। वचन्ति[1]। वक्षि। वक्थः। वच्मि। सम्प्रसारणम्। उवाच। ऊचतुः। ऊचुः। उवचिथ। उवक्थ। वक्ता। वक्ष्यति। वाक्षति। वाक्षाति। वक्तु। वग्धि। अवक्। वच्यात्। उच्यात्। अवक्। अवोचत्। अवक्ष्यत्। इण्प्रभृतयोऽनुदात्ताः परस्मैपदिनः समाप्ताः। विद, ज्ञाने।

विदो लटो वा ॥ ३। ४। ८३ ॥

विदः परेषां लडादेशानां णलादयो वा। वेद। विदतुः। विदुः। वेत्थ। विदथुः। विद, वेद। विद्व। विद्म। पक्षे। वेत्ति। वित्तः। विवेद। विविदतुः। विविदुः। उषविदेत्यादिप्रत्ययो वा। विदेत्यकारस्य विवक्षितत्वान्न लघूपधगुणः। विदाञ्चकार। वेदिता। वेदिष्यति। वेदिषति। वेदिषाति। वेदति। वेदाति।

विदाङ्कुर्वन्त्वि(२)त्यन्यतरस्याम् ॥ ३। १। ४१ ॥

वेत्तेर्लोट्याम्गुणत्वं लोटोलुक् लोडन्तकरोत्यनुप्रयोगश्च पक्षे निपात्यते। विदाङ्कुर्वन्त्विति बहुवचनमितिकरणान्न विवक्ष्यते प्रथमपुरुषश्च। "तनादिकृञ्भ्य उः" इत्युः। विदाङ्करोतु। इत्यादि। वेत्तु। वित्तात्। विद्धि। अवेत्। सिजभ्यस्तविदिभ्यश्चेति झेर्जुस्। अविदुः।

---

(१) अयमन्ति पदो न प्रयुज्यते। बहुवचनपरे, इत्यन्ये। झिपरे इत्यपरे। एकवचनपरे एवेत्येके, इति प्राचीनाः,

(२) इति शब्दोऽत्र प्रकारे, एवंजातीयक इत्यर्थः। इतिशब्दस्य शब्दस्वरूपपरकतां मत्वा तदेतद् परे न क्षमन्ते।

इश्च ॥ ८ । २ । ७५ ॥

दान्तस्य धातोः पदस्य सिपि रुर्वा । अवेः । पक्षे । अवेत् । विद्यात् । विद्युः । विद्यास्ताम् । अवेदीत् । अवेदिष्यत् । अस, भुवि । अस्ति ।

श्नसोरल्लोपः ॥ ६ । ४ । १११ ॥

श्नस्यास्तेश्चातो लोपः क्ङिति सार्वधातुके । स्तः । सन्ति । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ।

अस्ते भूः ॥ २ । ४ । ५२ ॥

आर्द्धधातुकविषयेऽस्तेर्भूरादेशः । बभूव । भविता । भविष्यति । भाविषति । भाविषाति । असति । असाति । असत् । असात् । अस्तु । स्तात् । स्ताम् । सन्तु ।

घ्वसोरेद्धावभ्यासलोपश्च ॥ ६ । ४ । ११९ ॥

घोरस्तेश्चैत्वं हौ परेऽभ्यासलोपश्च । आभीयत्वेनैत्वस्यासिद्धत्वाद्धेर्धिः । श्नसोरित्यल्लोपः । एधि । स्तात् । स्तम् । स्त । असानि । असाव । असाम । अस्तिसिचइतीट् । आसीत् । आस्ताम् । आसन् । आसीः । आस्तम् । आस्त । आसम् । आस्व । आस्म । स्यात् । स्याताम् । स्युः । भूयात् । अभूत् । अभविष्यत् ।

उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ॥ ८ । ३ । ८७ ॥

उपसर्गेभ्यः प्रादुसश्च परस्यास्तेः सस्य मूर्द्धन्यो यकारेऽचि च परे ।

(१)-तातङ्पक्षे रुत्वं न, परेण तेन बाधात् । कृते तु तातङि स्थानिवत्त्वेनापि न । सकृद्गताविति न्यायादिति माधवः ।

(२) अल्लोपस्यासिद्धत्वादाडागमो द्विवचनाद, इत्यपि सः ।

विषन्ति । प्रादुःषन्ति । विष्यात् । प्रादुःष्यात् । यच्परः किम् । अभिस्नः । मृजू, शुद्धौ ।

मृजेर्वृद्धिः ॥ ७ । २ । ११४ ॥

मृजेरङ्गस्येको वृद्धिर्धातुप्रत्यये परे । मार्ष्टि । मृष्टः । ( इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते ) मार्जन्ति । मृजन्ति । मार्क्षि । मृष्ठः । मृष्ठ । मार्ज्मि । मृज्वः । मृज्मः । ममार्ज । ममार्जतुः । ममृजतुः । ममार्जुः । ममृजुः । ममार्जिथ । ममार्ष्ठ । मार्जिता । मार्ष्टा । मार्जिष्यति । मार्क्ष्यति । मार्जिषति । मार्जिषाति । मार्क्षति । मार्क्षाति । मार्जति । मार्जाति । मार्ष्टु । मार्जन्तु । मृजन्तु । हुझल्भ्यइतिहेर्धिः । षत्वष्टुत्वजश्त्वानि । मृड्ढि । अमार्ट् । मृज्यात् । अमार्जीत् । अमार्क्षीत् । अमार्जिष्यत् अमार्क्ष्यत् । रुदिर्, अश्रुविमोचने ।

रुदादिभ्यः सार्वधातुके ॥ ७ । २ । ७६ ॥

रुदादिभ्यः परस्य वलादेः सार्वधातुकस्येट् । रोदिति । रुदितः रुदन्ति । रुरोद । रोदिता । रोदिष्यति । रोदिषति । रोदिषाति । रोदति । रोदाति । रोदितु । हौ परत्वादिटि सकृद्गताविति परिभाषया धित्वन्न । रुदिहि ।

रुदश्च पञ्चभ्यः ॥ ७ । ३ । ९८ ॥

रुदादिभ्यः परस्यापृक्तहलादेः सार्वधाकस्येट् । अरोदीत् । अरोदीः ।

( २ )–संक्रमो गुणवृद्धिप्रतिषेधविषयः । सूत्रे धातोः कार्यमुच्यमानमितिपरिभाषालभ्योऽर्थ -'धातुप्रत्यये' इति । तेन परिमृड्भ्यामित्यादौ नेति नागेशः ।

### अड् गार्ग्यगालवयोः ॥ ७ । ३ । ९९ ॥

रुदादिभ्यः परस्यापृक्तस्य हलादेरड् वा । अरोदत् । अरुदिताम् । अरुदन् । अरोदीः । अरोदः । अत्र रुदादिप्रकृतिं प्रत्ययविशेषञ्चापेक्षमाणाभ्यामडीड्भ्यां लिङ्मात्रापेक्षत्वेनान्तरङ्गत्वात्पूर्वमेव यासुटि अपृक्तस्याभावान्न तौ । रुद्यात् । आशिषि । रुद्यात् । रुद्यास्ताम् । इरितो वेत्यङ् । अरुदत् । तदभावे सिच् । अरोदीत् । ञिष्वप्, शये । स्वपिति । स्वपितः । स्वपन्ति । रुदादिभ्यइतीट् । सुष्वाप । सुषुपतुः । सुषुपुः । सुष्वपिथ । सुष्वप्थ ।

### सुविनिर्दुर्भ्यः सुपिसूतिसमाः ॥ ८ । ३ । ८८ ॥

स्वादिभ्यः सुप्यादीनां सस्य मूर्द्धन्यः । सुषुषुपतुः । सुषुषुपुः । सुसुष्वाप । सुस्वप्ता । स्वप्स्यति । स्वप्साति । स्वपति स्वपाति । स्वपितु । अस्वपत् । अस्वपीत् । स्वप्यात् । सुप्यात् । अस्वाप्सीत् । अस्वप्स्यत् । श्वस, प्राणने । श्वसिति । शश्वास । श्वसिता । श्वसिष्यति । श्वासिषति । श्वासिषाति । श्वसितु । अश्वसीत् । अश्वसत् । श्वस्यात् । अश्वसीत् । ह्मयन्तेति नवृद्धिः । अश्वसिष्यत् । अन च । अनिति । आन । अनिता । अनिष्यति । आनीत् । आनत् । आनीः । आनः ।

( १ ) अकिद्वचनेऽभ्यासस्य सम्प्रसारणे पूर्वत्रासिद्धमिति षत्वस्यासिद्धत्वात् पूर्वं हलादिः शेषे पश्चात्सुपिरूपस्याभावात् 'सुविनिर्दुर्भ्यः' इति न षत्वम् । किति तु परत्वात्सम्प्रसारणे षत्वे च पश्चाद्द्विर्वचनमिति सुषुषुपतुरित्यादि । पूर्वत्रासिद्धीयमद्विर्वचने इति नासिद्धत्वम् इति माधवः ।

अनितेः ॥ ८ । ४ । १९ ॥

उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः । प्राणिति । प्राणि-ष्यत् । जक्ष, भक्ष, हसनयोः । जक्षिति । जक्षितः । जक्षित्यादय-इत्यभ्यस्तसंज्ञा ।

अदभ्यस्तात् ॥ ७ । १ । ४ ॥

अभ्यस्तात् झस्यात् । अन्तापवादः । जक्षति । जक्षिषि । ज-जक्ष । जजक्षिथ । जक्षिता । जक्षिष्यति । जक्षिषति । जक्षिषाति जक्षति । जक्षाति । जक्षतु । अजक्षत् । अजक्षिताम् । सिजभ्य-स्तेतिझेर्जुस् । अजक्षुः । जक्ष्यात् । अजक्षीत् । अजक्षिष्यत् । रुदादयः पञ्च समाप्ताः । जागृ, निद्राक्षये । जागर्ति । जागृतः । जाग्रति । उषविदेत्याम्वा । जागराञ्चकार । जागराम्बभूव । जागरामास । जजागार ।

जाग्रोऽविचिण्णल्ङित्सु ॥ ७ । ३ । ८५ ॥

जागर्तेरिको गुणो विचिण्णल्ङिद्भ्योन्यस्मिन् वृद्धि निषेध प्रतिषेधविषये च । जजागरतुः । जजागरुः । जजागरिथ । जागरिता । जागरिष्यति । जागरिषति । जागरिषाति । जागर्तु । अजागः । अभ्यस्तत्वाज्जुस् ।

जुसि च ॥ ७ । ३ । ८३ ॥

इगन्ताङ्गस्य गुणो जुसि । अजागरुः । अजागः । अजागरम् ।

(१) जागरकः । जागरः । जागरयति । अत्र वृद्धिविषयः ।

जागृयात् । जागर्यात्। अजागरीत् । अजागरिष्टाम् । अजागरिष्यत् । दरिद्रा, दुर्गतौ । दरिद्राति ।

इद् दरिद्रस्य ॥ ६ । ४ । ११४ ॥

दरिद्रस्याऽऽत इद्धलादौ क्ङिति सार्वधातुके । दरिद्रितः ।

श्नाभ्यस्तयो रातः ॥ ६ । ४ । ११२ ॥

श्नाभ्यस्तयोरातोऽन्तस्य लोपः क्ङिति सार्वधातुके । दरिद्रति । अनेकाच्त्वादाम् । दरिद्राञ्चकार । ददरिद्रतुः । ददरिद्रुः । (दरिद्रातेरार्द्धधातुके लोपो वक्तव्यः) ददरिद्रिथ । दरिद्रिता । दरिद्रिष्यति । दरिद्रषाति । दरिद्रातु । अदरिद्रात् । अदरिद्रिताम् । दरिद्रियात् । दरिद्रयात् । [अद्यतन्यां वेति वक्तव्यम्] अदरिद्रीत् । अदरिद्रासीत् । अदरिद्रिष्यत् । [का०] न दरिद्रायके लोपो दरिद्राणे च नेष्यते । दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥ चकासृ, दीप्तौ । चकास्ति । चकासाञ्चकार । चकासिता । चकासिष्यति । चकासिषति । चकासिषानि । चकास्तु । चकासतु । चकाधि । 'धि चे' ति सलोपः । चकासानि ।

(१) पूर्वविप्रतिषेधेन रिङं बाधित्वा गुणः ।

(२) अत्र जागृ इ स् इत्यवस्थायां यण् प्राप्त तं सार्वधातुकगुणो बाधते, तां सिचिवृद्धिः। तां जागर्ति गुणः, तत्र कृते हलन्तलक्षणा वृद्धिः प्राप्ता, नेटीति निषिद्धा, ततो हलादेरिति बाधित्वा ऽतोल्रान्तस्येति प्राप्ता, ह्मयन्तेति निषिध्यते । तदाहुः- गुणो वृद्धि गुणो वृद्धिः प्रतिषेधो विकल्पनम् । पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव तोति दीक्षितः ।

(३) अद्यतनीति प्राचां लुङः संज्ञा ।

## तिप्यनस्तेः ॥ ८ । २ । ७३ ॥

अस्तिभिन्नस्य सान्तस्य पदस्य दस्तिपि । अचकात् । अचकाद् । अचकासुः ।

## सिपि धातो रुर्वा ॥ ८ । २ । ७४ ॥

पदान्तस्य धातोः सस्य रुः स्याद्वा सिपि । पक्षे दः । अचकाः । अचकाद् । अचकासीत् । अचकासिष्यत् । शासु, अनुशिष्टौ । शास्ति ।

## शास इदङ्हलोः ॥ ६ । ४ । ३४ ॥

शास उपधाया इदङि, हलादौ क्ङिति च । शिष्टः । शासति । शास्सि । शिष्ठः । शिष्ठ । शास्मि । शिष्वः । शिष्मः । शशास । शशासतुः । शशासुः । शासिता । शासिष्यति । शासिषति । शासिषाति । शास्तु । शिष्टात् । शिष्टाम् । शासतु ।

## शा हौ ॥ ६ । ४ । ३५ ॥

शासः शा हौ । आभीयत्वेनासिद्धत्वाद्धेर्धिः । शाधि । शिष्टात् । शिष्टम् । शिष्ट । शासानि । अशात् । अशिष्टाम् । अशासुः । अशात् । अशाः । शिष्यात् । शिष्यास्ताम् । शिष्यास्ताम् । सर्तिशास्त्यर्तिभ्यश्च । अशिषत् । अशासिष्यत् । इतिविदादय उदात्ताः परस्मैपदिनः । दीधीङ्, दीप्तिदेवनयोः । दीध्यादयः पञ्च धातवश्छान्दसाः[2] ।
दीधीते । दीध्याते ।

---

(१) अङ्प्राग्वत्सैव शासेङ् हुपाद् आशास्ते इत्यादौ नेति भाष्ये स्पष्टम् ।

(२) माधवानुरोधेन पञ्चानां छान्दसत्वोक्तिः शासित्, तस्याख्यातिकक्कारादीनां च, परमार्थं जक्षित्यादिसूत्रस्थभाष्यानुरोधः । तेन सस्तिं विहाय चत्वार एव छान्दसाः । वशिन्तु केचन कवयो लोकेऽपि प्रयुञ्जते, परन्तद्वै भाष्यविरुद्धम् ।

यीवर्णयोर्दीधीवेव्योः ॥ ७ । ४ । ५३ ॥

दीधीवेव्योर्लोपो याडाविवर्णादौ च । इति लोपं बाधित्वा नित्यत्वाट्टेरेत्वम् । दीध्ये । दीधीवेवीटामिति गुणनिषेधः । दीध्याञ्चक्रे । दीधिता । दीधिष्यते । दीधिषतै । दीधिषातै । दीध्यतै । दीध्यातै । दीधीताम् । दीध्यै । आदीधीत् । दीधीत । दीधिषीष्ट । अदीधिष्ट । अदीधिष्यत् । वेवीङ्, वेतिना तुल्ये । वी गतीत्यनेन तुल्येऽर्थे वर्तत इत्यर्थः । पूर्ववदुदाहरणादीनि । सेटावात्मनेभाषौ । अथ त्रयः परस्मैपदिनः । षस, सस्ति, स्वप्ने । सस्ति । सस्तः । ससन्ति । ससास । सेसतु । ससिता । ससिष्यति । सासिषति । सासिषाति । सस्तु । असत् । असस्ताम् । अससन् । असः । असत् । अससम् । सस्यात् । सस्याताम् । सस्युः । असासीत् । अससीत् । अससिष्यत् । इदित्वान्नुम् । संस्ति । संस्तः । संस्तन्ति । सांस्तस । संस्थः । संस्थ । संस्त्वम् । ससंस्त । ससंस्तिथ । संस्तिता । संस्तिष्यति । संस्तिषति । संस्तिषाति । संस्तु । संस्तात् । संस्ताम् । संस्तन्तु । असन् । संस्त्यात् । संस्त्याताम् । संस्त्यास्ताम् । असंस्तीत् । असंस्तिष्यत् । वश, कान्तौ । कान्तिरिच्छा । वष्टि । उष्टः उशन्ति । वक्षि । उष्ठः । उवाश । ऊशतुः । वशिता । वष्टु । उष्टात् । उष्टाम् । उशन्तु । उड्ढि । वशानि । अवट् । उश्यात् । उश्याताम् । उश्यास्ताम् । अवाशीत् । अवशीत् । अवाशिष्यत् । षसादयः परस्मैपदिनस्त्रयः समाप्ताः ।

[ चर्करीतञ्च ] [ ग० ] यङ्लुगन्तमप्यादादिकं परस्मैपदञ्चेत्यर्थः । ह्नुङ्, । अपनयने । ह्नुते । ह्नुवाते । ह्नुवते । जुह्नुवे । ह्नोता । ह्नोष्यते । ह्नोषतै । ह्नोषातै । ह्नुताम् । अह्नुत । ह्नुवीत । ह्नोषीष्ट । अह्नोष्ट । अह्नोष्यत । अनुदात्त आत्मनेपदी ।

इति लुग्विकरणा अदादयः समाप्ताः ॥

# * अथ जुहोत्यादिगणः *

हु, दानाऽदनयोः । आदाने चेत्येके । प्रीणनेऽपीति भाष्यम् । इह दानं चोदितं आधारे हविःप्रक्षेप इति स्वभावाल्लभ्यम् ।

जुहोत्यादिभ्यः श्लुः ॥ २ । ४ । ७५ ॥

एभ्यः शपः श्लुः ।

श्लौ ॥ ६ । १ । १० ॥

श्लौ अनभ्यासस्य धातोः प्रथमस्यैकाचो द्वे स्तः। जुहोति। जुहुतः। अदभ्यस्तादित्यत् । हुश्नुवोरितियण् । जुह्वति ।

बहुलं छन्दसि ॥ २ । ४ । ७६ ॥

एभ्यः शपः श्लुर्बहुलं छन्दसि । हवति । भरति । इत्यादयोऽपि ।

भीह्रीभृहुवां श्लुवच्च ॥ ३ । १ । ३९ ॥

एभ्यो लिटयाम्वा तस्मिन् श्लाविव कार्यञ्च । जुहवाञ्चकार । जुहाव । होता । होष्यति । हौषाति । हौषाति । जुहवति । जुहवाति । हवति । हवाति । जुहोतु । हुझल्भ्योरिति हेर्धिः । जुहुधि । आटिपित्वाद्गुणः। जुहवानि। अजुहोत्। हुश्नुवोरितियणं परत्वाद्वाधित्वा जुसिचेतिगुणः । अजुहवुः । जुहुयात् । आशिषि । अकृदिति दीर्घः । हूयात् । अहौषीत् । अहोष्यत् । ञिभी, भये । बिभेति ।

(१) आहवनीयाग्न्यादिरूपे ॥

## भियोऽन्यतरस्याम् ॥ ६ । ४ । ११५ ॥

भिय इद्वा हलादौ क्ङिति सार्वधातुके । बिभितः । बिभीतः । बिभ्यति । बिभयाञ्चकार । बिभाय । भेता । भेष्यति । भैषति । भैषाति । बिभयति । बिभयाति । भयति । भयाति । बिभेतु । अबिभेत् । बिभियात् । भीयात् । अभैषीत् । अभेष्यत् । ह्री, लज्जायाम् । जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयाञ्चकार । जिह्राय । ह्रेता । ह्रेष्यति । ह्रैषति । ह्रैषाति । जुहोत्यादयोऽनुदात्ताः परस्मैपदिनः । पॄ, पालनपूरणयोः । उदात्तः परस्मैभाषः ।

## अर्तिपिपर्त्योश्च ॥ ७ । ४ । ७७ ॥

अर्तिपिपर्त्योरभ्यासस्येत् श्लौ ।

## उदोष्ठ्यपूर्वस्य ॥ ७ । १ । १०२ ॥

अङ्गावयवोष्ठ्यपूर्वस्य ॠदन्तस्य धातोरुत् । गुणवृद्ध्योर्विषये तु विप्रतिषेधेन ते भवतः । पिपर्ति । उत्वम् । रपरत्वम् । हलिचेति दीर्घः । पिपूर्त्तः । पिपुरति । पपार । क्ङिति लिटि ऋच्छत्यॄतामिति गुणे प्राप्ते ।

## श्रृदॄप्रां ह्रस्वो वा ॥ ७ । ४ । १२ ॥

एषां ह्रस्वो वा क्ङिति लिटि । पक्षे गुणः । पप्रतुः । पप्रुः । पपरतुः । पपरुः । परिता । परीता । परिष्यति । परीष्यति । पारीषति । पारीषाति । पारिषति । पारिषाति । परीषति । परीषाति । परिषति ।

(१) दीर्घोच्चारणमुत्वार्थम् ।

(२) गुणाभावे वार्णादाङ्गमिति यणं बाधित्वोत्वापत्त्या गुण एव न विकल्पितः ।

परिपाति। पिपरति। पिपराति। पिपर्तु। अपिपः। अपिपूर्ताम्। अपिपरुः। पिपूर्यात्। पूर्यात्। अपारीत्। अपारिष्टाम्। ह्रस्वान्तोऽयं धातुरिति वर्धमानकाश्यपाभरणपुरुषकाराः। अत्रोदाहरणानि- पिपर्ति। पिपृतः। पिप्रति। पपार। पपर्थ। पर्ता। ऋद्धनोरितीट्। परिष्यति। पिपर्त्तु। पिप्रियात्। आशिषि। प्रियात्। अपार्षीत्। अपरिष्यत्। ह्रस्वविधानात् पाणिनीयमते तु। तां पिपृतं रोदसी। पाहिमाग्ने पिपृहि। इत्यादयश्छान्दसाद्रष्टव्याः। डुभृञ्, धारणपोषणयोः।

भृञामित्॥ ७। ४। ७६॥

भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्येत्स्यात्[1]। बिभर्ति। बिभृतः। बिभ्रति। बिभृते। बिभृध्वे। बिभराञ्चकार। बभार। बभर्थ। बभृव। भर्ता। भरिष्यति। भार्षति। भार्षाति। बिभरति। बिभराति। बिभर्तु। बिभृहि। बिभराणि। अबिभः। बिभृयात्। भ्रियात्। भृषीष्ट। अभार्षीत्। अभृत। अभरिष्यत्। अभरिष्यत। माङ्, माने शब्दे च।

ई हल्यघोः॥ ६। ४। ११३॥

श्नाभ्यस्तयोरात ई स्याद्धलादौ क्ङिति सार्वधातुके न तु घोः। मिमीते। श्नाभ्यस्तयोरित्याल्लोपः। मिमाते। मिमते। अमास्त। अमास्यत। ओहाङ्, गतौ। जिहीते। जिहाते। जिहते। जहे। हाता। हास्यते। ओहाक्, त्यागे। परस्मैपदी। जहाति।

(१) बहुवचनादाद्यर्थावगतिः, निजामित्यतस्त्रयाणामित्यनुवर्तते।

जहातेश्च ॥ ६ । ४ । ११६ ॥

जहातेरिद्वा हलादौ क्ङिति सार्वधातुके । पक्षे ईत्वम् । जहितः । जहीतः । जहति । जहौ । हाता । हास्यति । हासति । हासाति । जहति । जहाति । जहातु ।

आ च हौ ॥ ६ । ४ । ११७ ॥

जहातेरा चादिद्वा हौ परे । जहाहि । जहिहि । जहीहि । अजहात् ।

लोपो यि ॥ ६ । ४ । ११८ ॥

जहातेरालोपो यादौ क्ङिति सार्वधातुके । जह्यात् । हेयात् । अहासीत् । अहास्यत् । डुदाञ्, दाने । प्रणिददाति । दत्तः । ददति । दत्ते । ददौ । दातासि । दातासे । दास्यति । दास्यते । दासति । दासाति । दासतै । दासातै ।

घोर्लोपोलेटि वा ॥ ७ । ३ । ७० ॥

घुसंज्ञकस्य लोपो वा लेटि । ददति । ददाति । ददत् । ददात् । ददातु । घ्वसोरित्येत्वाभ्यासलोपौ । देहि । अददात् । अदत्ताम् । अददुः । दद्यात् । एत्वम् । देयात् । अदात् । अदाताम् । अदुः । अदित् । डुधाञ्,धारणपोषणयोः । दानेऽप्येके । प्रणिदधाति ।

दधस्तथोश्च ॥ ८ । २ । ३८ ॥

द्विरुक्तस्य झषन्तस्य दधातेर्बशो भष् तथोःपरतश्चात्स्ध्वोः । आलोपस्य न स्थानिवत्वम् । पूर्वत्रासिद्धीयेनस्थानिवदिति । धत्तः । दधति । धत्थ । दध्वः । धत्ते । धत्से । धद्ध्वे । धेहि ।

अधित। अधास्यत्। अधास्यत। अनुदात्तावुभयतोभाषौ। अथ त्रयः स्वरितेतः। णिजिर्, शौचपोषणयोः।

निजां त्रयाणां गुणः श्लौ॥ ७। ४। ७५॥

त्रयाणां निजादीनामभ्यासस्य गुणः श्लौ। नेनेक्ति। नेनिक्तः। नेनिजति। नेनिक्ते। निनेज। निनिजे। नेक्ता। नेक्तासि। नेक्तासे। नेक्ष्यति। नेक्ष्यते। नेक्षति। नेक्षाति। नेक्षतै। नेक्षातै।

नाऽभ्यस्तस्याचि पिति सार्वधातुके॥ ७। ३। ८७॥

अभ्यस्तस्येको न गुणोऽजादौ पिति सार्वधातुके। नेनिजति। नेनिजाति। नेनिजत्। नेनिजात्। नेनिजतै। नेनिजातै। नेनेक्तु। नेनिग्धि। नेनिजानि। नेनिक्ताम्। अनेनेक्। अनेनिक्ताम्। अनेनिजुः। अनेनिक्त। नेनिज्यात्। नेनिजीत। निज्यात्। निक्षीष्ट। अनिजत्। अनैक्षीत्। अनिक्त। अनेक्ष्यत्। अनेक्ष्यत। विजिर्, पृथग्भावे। वेवेक्ति। वेविक्ते। विवेजिथ। विविजे। वेक्तासि। वेक्तासे। वेविजति। वेविजाति। वेविजतै। वेविजातै। वेवेक्तु। विजइडितिङित्वन्न। ओविजीइत्यस्यैव तत्र ग्रहणात्। ओविजी रुधादौ। तुदादौ च। अन्यत्सर्वं निजिवत्। विष्लृ, व्याप्तौ। वेवेष्टि। वेविष्टे। वेक्ष्यति। षढोः कस्सि। वेविड्ढि। ष्टुत्वे जश्त्वं डकारः। अवेवेट्। लृदित्वान्नित्यमङ्। अविषत्। तङि तु शलइगुपधादनिटः क्सः। अजादौ क्सस्याचि, इत्यल्लोपः। अविक्षत। अविक्षाताम्। अविक्षन्त। अवेक्ष्यत्। अवेक्ष्यत। निजादयः स्वरितेतोऽनुदात्ताः समाप्ताः॥ अथाऽऽगणान्तात्परस्मैपदिनश्छान्दसाश्चैकादश। घृ, क्षरणदीप्त्योः। भृञामिदिति नित्ये प्राप्ते—

(१) अभ्यस्तस्यकिम् द्वेषाणि अचिकिम् नेनेक्ति। पितोत्युत्तरार्थम्।

## बहुलं छन्दसि ॥ ७ । ४ । ७८ ॥

अभ्यासस्येद्बहुलं छन्दसि श्लौ परे । जिघर्त्ति । जिघृतः । जघृतः । जिघ्रति । जघार । घर्ता । घरिष्यति । घार्षति । घार्षाति । जिघ्रति । जिघ्राति । जघ्रति । जघ्राति । जिघर्तु । जघर्तु । अजिघः । अजघः । जिघृयात् । घ्रियात् । अघार्षीत् । अघरिष्यत् । हृ, प्रसह्यकरणे । (हृग्रहोर्भश्छन्दसि हस्य भत्वम्) इतिहस्य भश्छन्दसि जिभर्त्ति । जभर्त्ति । जभार । जहार । भर्त्ता । भरिष्यति । भार्षति । भार्षाति । जिभर्त्तु । जभर्त्तु । जभ्रतु । जभृहि । अजभः । जभृयात् । भ्रियात् । अभार्षीत् । अभरिष्यत् । ऋ, सृ, गतौ । बहुलंछन्दसीत्येवसिद्धे अर्तिपिपर्त्योश्चेतीत्वविधानादयं भाषायामपि । अभ्यासस्यासवर्णे, इतीयङि पिति गुणः । अन्यत्राजादौ यणादेशः । इयर्त्ति । इयृतः । इय्रति । आर । आरतुः । आरिथ । अर्त्ता । अर्तासि । अर्त्तासि । अरिष्यति । आर्षति । आर्षाति । इयरति । इयराति । इयर्त्तु । इयृतात् । इयृताम् । इय्रतु । ऐयः । इयृयात् । अर्यात् आरिष्यत् । ससर्त्ति । सिसर्त्ति । इत्यादि । घ्रादयश्चत्वारोऽनुदात्ताः । भस, भर्त्सनदीप्त्योः । बिभस्ति । बभस्ति ।

## घसिभसोर्हलि च ॥ ६ । ४ । १०० ॥

घसिभसोरुपधाया लोपो हलादावजादौ च क्ङिति छन्दसि ।

---

(१) यणोऽचः परस्मिन्नितिस्थानिवत्त्वाल्लोपो व्योरिति यलोपो न । यलोपे स्थानिवत्त्वनिषेधस्तु लोपरूपाजादेशस्यैवेति ।

(२) द्वित्वेऽभ्यासस्येत्त्वे इयङि, उत्तरखण्डे गुणे, रपरत्वे, हल्ङ्यादिलोपे, विसर्गे, आट् वृद्धिः ।

झलो झलीति सलोपः । बब्धः । बप्सति । बभास । बिभस्तु । बब्धाम् । बभसानि । अबिभः । अबिब्धाम् । अबिभसुः । बप्स्यात् । बप्स्याम् । भस्यात् । भस्यास्ताम् । अभासीत् । अभसीत् । अभसिष्यत् । कि, ज्ञाने । चिकेति । चिकयति । चिकयाति । चिकेतु । चिकिहि । अचिकेत् । चिकियात् । कीयात् । अकैषीत् । तुर, त्वरणे । तुतोर्ति । तुतूर्तः । तुतुरति । तुतुराति । तुतोर्तु । तुतुराणि । अतुतोः । अतुतुरुः । तुतूर्यात् । तूर्यात् । अतोरीत् । धिष, शब्दे । दिधेष्टि । दिधिष्टः । दिधिषतीत्यादि । धन, धान्ये । दधन्ति । दधन्ति । दधान । धनिता । धनिष्यति । दधनति । दधनाति । धानिषति । धानिषाति । अधनिष्यत् । जन, जनने । जजन्ति ।

जनसनखनां सञ्झलोः ॥ ६ । ४ । ४२ ॥

जनादीनामात्वं झलादौ सनि झलादौ क्ङिति च । जजातः । जज्ञति । जजंसि । जजाथः । जजन्मि । जजान । जज्ञतुः । जानिषति । जानिषाति । जजनति । जजनाति । जजन्तु ।

वा छन्दसि ॥ ३ । ४ । ८८ ॥

छन्दसि विषये हिरपिद्वा । जजन्हि । जजनानि । अजजन् । जजायात् । जजन्यात् । अजानीत् । अजनीत् । गा, स्तुतौ । जिगाति । जिगीतः । जिगति । जगौ । गाता । गास्यति । गासति । गासाति । जिगातु । अजिगात् । जिगीयात् । गायात् । अगासीत् । अगास्यत् ।

इति श्लुविकरणो जुहोत्यादिगणः समाप्तः ।

# * अथ दिवादिगणः *

——+*+——

दिवुं, क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्ति-गतिषु । झूषन्ताःपरस्मैपदिनः ।

दिवादिभ्यः श्यन् ॥ ३ । १ । ६९ ॥

एभ्यः श्यन् कर्त्रर्थे सार्वधातुकेपरे। शपोऽपवादः । हलि च। इतीको दीर्घः । दीव्यति । दीव्यतः। दीव्यन्ति । दिदेव । देविता । देविष्यति । देविषति । देविषाति । दीव्यति । दीव्याति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । षिवुं, तन्तुसन्ताने । परिषीव्यति । परिषिषेव । न्यषेवीत् । न्यसेवीत् । स्रिवु, गतिशोषणयोः । स्रीव्यति । ष्ठिवु, निरसने । ष्ठीव्यति । केचिदिवात्रिगं पठन्ति "सुब्धातु ष्ठिवुष्वष्कतीनामि" तिषस्य सकारनिषेधः। तिष्ठेव । ष्णुसु, अदने । आदानइत्येके । अदर्शनइत्यपरे । स्नुस्यति । सुष्णोस । ष्णसु, निरसने । स्नस्यति । सस्नास । सस्नसतुः । क्नसु, ह्वरणदीप्तयोः । ह्वरणं कौटिल्यम् । क्नस्यति । चक्नास । व्युष, दाहे । व्युष्यतीत्यादि । प्लुषच, प्लुष्यति । नृती, गात्रविक्षेपे । नृत्यति । ननर्त्त । ननर्त्तिथ ।

सेऽसिचि कृतचृतछृदतृदनृतः॥ ७ । २ । ५७ ॥

कृतादिभ्यः परस्य सिज्भिन्नस्य सादेरार्द्धधातुकस्येड् वा । नर्तिष्यति । नर्त्स्यति । नर्तिषति । नर्त्तिषाति । नर्त्सति । नर्त्साति । नृत्यति ।

नृत्याति । नृत्यतु । अनृत्यत् । नृत्येत् । नृत्यात् । अनर्त्तीत् । अनर्त्तिष्यत् । अनर्त्स्यत् । असी, उद्वेगे । वाभ्राश' इतिश्यन्विषयेपक्षे शप् । अस्यति । त्रसति । तत्रास ' त्रेसिथ । तत्रसिथ । वाजॄभ्रमुत्रसाम्' इति'एत्वाभ्यासलोपविकल्पः । त्रेसतुः । तत्रसतुः - त्रेसुः । तत्रसुः । त्रसिता-त्रसिष्यति । त्रासिषति ' त्रासिषाति । त्रसिषति । त्रसिषाति । त्रस्यतु । त्रसतु । अत्रस्यत् । अत्रसत् । त्रस्येत् । त्रसेत् । त्रस्यात् । अत्रासीत् । अत्रसीत् । अत्रसिष्यत् । कुथ, पूतीभावे । पूतीभावो दुर्गन्धः=दि कुथ्यतीत्यादि । पुथ, हिंसायाम् । गुध, परिवेष्टने । क्षिप, प्रेरणे । क्षिप्यति । चिक्षेप । क्षेप्ता । क्षेप्स्यति । क्षेप्सति । क्षेप्साति । क्षिप्यतु । अक्षिप्यत् । क्षिप्येत् । क्षिप्यात् । अक्षैप्सीत् । अक्षेप्स्यत् । पुष्प, विकसने । पुष्प्यति । पुपुष्प । तिम, ष्टिम, ष्टीम, आर्द्रीभावे । तिम्यति । स्तिम्यति । स्तीम्यती । व्रीड, चोदने लज्जायाञ्च । व्रीड्यति । विव्रीड । इष, गतौ । इष्यति । [struck] । अभ्यासस्यासवर्णे, इतीयङ् - इयेष । ईषतुः । ईषुः । एषिता । ऐषीत् । ऐषिष्यत् । षह, षुह, चक्यर्थे । चक्यर्थस्तृप्तिः । सह्यति । सुह्यति । ससाह । सेहतुः । सेहुः । सेहिथ । सुसोह । सहिता । तीषसहेति इड्विकल्पः । सोढा । सहिवहोरोदवर्णस्य' ओकारः । सहिष्यति । साहिषति । साहिषाति । सह्यति । सह्याति । ह्म्यन्तेति न वृद्धिः । असहीत् । असहिष्यत् । जॄष, झॄष, वयोहानौ । ॠतइद्धातो' रितीत्वेरपरत्वे' हलिचेति दीर्घः । जीर्यति । जीर्यतः । जजार । वाजॄभ्रमुत्रसामित्वेत्वाभ्यासलोपौवा । जेरतुः । जजरतुः । वृतोवेत्यालिङ्गिवा । दीर्घः । जरिता ।

( १ ) इषे स्तकारे श्यन्प्रत्ययात्प्रतिषेधइतीड् विकल्पो न । तीषसहेत्यत्र नवर्तते

( २ ) अत्र सहिपाठंवहवोमन्यन्ते

जरीता । जरिष्यति । जरीष्यति । जारीषति । जारीषाति । जारिषति । जारिषाति । जरिषति । जरिषाति । जीर्यति । जीर्याति । जीर्यतु । अजीर्यत् । जीर्येत् । जीर्यात् । जृस्तम्भिवत्यङ्वा । ऋदृशोऽङीतिगुणः । अजरत् । पक्षे । अजारीत् । अजरिष्यत् । अजरीष्यत् । झीर्यति । जझरतुः । अझारीत् । दिवाद्यउदात्ताउदात्तेतः क्षिपिवर्जम् ॥ षूङ्, प्राणिप्रसवे । सूयते । सुषुवे । स्वरतिसूतीति वलादाविड्विकल्पः । लिट्यमुं विकल्पं बाधित्वापुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्याच्छ्रयुकः कितीति प्रतिषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सुषुविषे । सुषुविवहे । सुषुविमहे । सोता । सविता । सोष्यते । सविष्यते । साविषतै । साविषातै । सोषतै । सोषातै । सूयतै । सूयातै । सूयताम् । असूयत । सूयेत । सोषीष्ट । सविषीष्ट । असविष्ट । असोष्ट । असविष्यत । असोष्यत । दूङ्, परितापे । दूयते । दुदुवे । दविता । द्वाविमावात्मनेभाषा वुदात्तौ । दीङ्, क्षये । दीयते ।

दीङो युडचि क्ङिति ॥ ६ । ४ । ६३ ॥

दीङोयुडजादौ क्ङिति । स च एरनेकाचेति यणि कर्त्तव्येऽसिद्धवदत्रेति नासिद्धः (वुग्युटावुवङ्यणोः सिद्धौ । वक्तव्यौ) दिदीये । दिदीयिषे । दिदीयिद्वे । दिदीयिध्वे । दिदीयिवहे ।

मीनातिमिनोतिदीङांल्यपि च ॥ ६ । १ । ५० ॥

एषामात्वं ल्यपि चादेज्विषयेऽशिति । दाता । दास्यते । दासतै । दासातै । दीयताम् । अदीयत । दीयेत । दासीष्ट । अदास्त । अदास्थाः । आदासि । अत्रात्वेकृतेदारूपत्वेऽपिदीङःप्रतिषेधः

स्थाध्वो रित्वे इति, इत्वकित्वयोर्घुसंज्ञानिषिध्यते। अतएव विषयविशेषेघुत्वनिषेधादन्यत्रकृतात्वस्यघुसंज्ञायां प्रणिदातेत्यादिसिद्धमित्येके। अदास्यत। डीङ्, विहायसागतौ। डीयते। डिड्ये। अडयिष्ट। अडयिष्यत। धीङ्, आधारे। धीयते। दिध्ये। धेता। मीङ्, हिंसायाम् अत्रप्राणावियोगोहिंसाफलं गृह्यते। मीयते। रीङ्, स्रवणे। रीयते। रिर्ये। रेतासे। रेष्यते। रैषतै। रैषातै। रीयतै। रीयातै। रीयताम्। अरीयत। रीयेत। रेषीष्ट। अरेष्ट। अरेष्यत। लीङ्, श्लेषणे। लीयते।

## विभाषा लीयतेः॥ ६।१।५१॥

लीयतेर्ल्यपि एचश्चविषये आत्वं वा। लेता। लाता। लास्यते। लेस्यते। एज्विषये किम्। लीयते। लिल्ये। लासतै। लासातै। लैषतै। लैषातै। लीयताम्। अलीयत। लीयेत। लासीष्ट। लेषीष्ट। अलास्त। अलेष्ट। अलास्यत। अलेष्यत। व्रीङ्, वृणोत्यर्थे। व्रीयते। विव्रिये। संयोगपूर्वत्वाद्यण् न। व्रेतेत्यादि रीवत्। वृत् स्वादय ओदितः। तत्फलम्, ओदितश्च। इतिनिष्ठानत्वम्। पीङ्, पाने। पीयते। पिप्ये। माङ्, माने। मायते। ममे। ईङ्, गतौ। ईयते। अयाञ्चक्रे। एता। एष्यते। ऐषतै। ऐषातै। ईयताम्। ऐयत। ईयेत। एषीष्ट। ऐष्ट। ऐष्यत। प्रीङ्, प्रीतौ। प्रीयते। पिप्रिये। दीङादय आत्मनेपदिनोडीङ्वर्जमनुदात्ताः। अथपरस्मैपदिनश्चत्वारः। शो, तनूकरणे।

## ओतः श्यनि॥ ७।३।७१॥

ओदन्तस्य लोपः श्यनि। श्यति। श्यतः। श्यन्ति। शशौ। शशतुः। शाता। शास्यति। श्यतु। श्य। अश्यत्। श्येत्। शायात्।

(१) लीलीङो र्द्वयोर्ग्रहणम्।

विभाषाघ्राधेट्शाच्छासः इति सिचो लुग्वा । लुगभावे यमरमनमातां सक् च इति सक्। अशात् । अशाताम् । अशुः । अशासीत् । अशासिष्टाम् । अशास्यत् । छो, छेदने । छ्यति । चच्छौ । चच्छतुः । इत्यादि सर्वं श्यतिवत् । षोऽन्तकर्मणि । नाशनमन्तकर्म । स्यति । ससौ । अभिष्यति । अभ्यष्यत् । दो, अवखण्डने । द्यति । ददौ । प्रणिदाता । देयात् । अदात् । श्यतिप्रभृतयोऽनुदात्ताः । अथात्मनेपदिनः पञ्चदश । जनी, प्रादुर्भावे । प्रादुर्भाव उत्पत्तिरभिव्यक्तिर्वा ।

ज्ञाजनोर्जा ॥ ७ । ३ । ७९ ॥

ज्ञाजनोर्जा शिति । जायते । जज्ञे । जज्ञाते । जज्ञिरे । जनिता । जनिष्यते । जानिषतै । जानिषातै । जायतै । जायातै । जायते । जायांते । जायताम् । अजायत । जायेत । जनिषीष्ट । लुङि दीपजनेति कर्तरि तशब्दे च्लेर्वा चिण् । तदुत्तरस्य तशब्दस्य लुक् ।

जनिवध्योश्च ॥ ७ । ३ । ३५ ॥

जनिवध्योर्यदुक्तं तन्न चिणि ञिति णिति कृति च । अजनि । अजनिष्ट । अजनिषाताम् । अजनिषत । अजनिष्यत । दीपी, दीप्तौ । दीप्यते । दिदीपे । दीपिता । दीपिष्यते । दीप्यताम् । दीपिषतै । दीपिषातै । दीप्यताम् । अदीप्यत । दीप्येत । दीपिषीष्ट । अदीपि । अदीपिष्ट । अदीपिष्यत । पूरी, आप्यायने । पूर्यते । पुपूरे । अपूरि । अपूरिष्ट । तूरी । गतित्वरणहिंसनयोः । तूर्यते तुतूरे । अतूरिष्ट । धूरी, गूरी । हिंसागत्योः । धूर्यते । दुधूरे । गूर्यते जुगूरे । घूरी, जूरी, हिंसावयोहान्योः । शूरी, हिंसास्तम्भनयोः । चूरी, दाहे । तप, ऐश्वर्ये । अनिट् । तप्यते । तेपे । तप्ता । तप्स्यते । ताप्सतै । ताप्सातै । तप्यताम् । अतप्यत । तप्येत । तप्सीष्ट ।

अतप्त। अतप्स्यत। वावृतु, वरणे। वावृत्यते। वावर्त्तांचक्रे। वेदे तु ववावृत्ते। वावर्तितासे। वावर्त्तिष्यते। अवावर्त्तिष्ट। क्लिश, उपतापे। क्लिश्यते। चिक्लिशे। क्लेशितेत्यादि। काशृ, दीप्तौ। काश्यते। वाश्र, शब्दे। वाश्यते। ववाशे। जन्यादयोऽनुदात्तेतस्तपिवर्जमुदात्ताः॥ अथपञ्चस्वरितेतः। मृष, तितिक्षायाम्। तितिक्षा क्षमा। मृष्यति। मृष्यते। ममर्ष। ममृषे। मर्षिता। मर्षिष्यति। मर्षिषते। मर्षिषातै। मृष्यतु। मृष्यताम्। अमृष्यत्। अमृष्यत। मृष्येत्। मृष्येत। मृष्यात्। मर्षिषीष्ट। अमर्षीत्। अमर्षिष्ट। अमर्षिष्यत्। अमर्षिष्यत। ईशुचिर, पूतीभावे। पूतीभावः क्लेदः। शुच्यति। अशुचत् अशोचीत्। अशोचिष्ट। अशोचिष्यत्। अशोचिष्यत। णह, बन्धने। नह्यति। नह्यते। ननाह। नेहतुः। नेहुः। नेहिथ। नहोध इति हकारस्य धत्वम्। ननद्ध। नद्धा। नत्स्यति। नत्स्यते। नात्सति। नात्साति नह्यताम्। अनात्सीत्। रञ्ज, रागे। रज्यति। रज्यते। शप, आक्रोशे। शप्यति। शप्यते। शाप्सति। शाप्साति। शप्सतै। शाप्सातै। अशाप्सीत्। अशप्त। अशप्स्यत्। अशप्स्यत। मृषादयस्त्रयोऽनुदात्ताः स्वरितेत उभयपदिनः॥ अथैकादशानुदात्तेतः पद्यते। पेदे। पत्ता। पत्स्यते। पात्सतै। पात्सातै। पद्यताम्। अपद्यत। पद्येत। पत्सीष्ट।

## चिण् ते पदः॥ ३। १। ६०॥

पद्यतेश्च्लेश्चिण् लुङि तशब्दे परे। अपादि। अपत्साताम्। अपत्सत। अपत्स्यत। खिद, दैन्ये। खिद्यते। चिखिदे। खेत्ता।

(१) केचित्तु वेत्यस्यपूर्वेणान्वयः, तपिधातुरैश्वर्ये वातङ् पदंलभते इति तदर्थः। ततो वावृत्यमानेति भट्टिप्रयोगे वाशब्द इवार्थकः वृत्ते तु वृत्तवावृत्तावितिकोशोक्तवावृत्तशब्दः पृषोदरादित्वात्साधुः, अत्रार्थे एव भाष्यानुमइइत्याहुः।

(२) ईओदितो निष्ठायमितीणनिषेध ईदित्फलम्।

खित्सीष्ट । आखित्त । विद, सत्तायाम् विद्यत इत्यादि । खिदिवत् वेत्तीति ज्ञाने गतम् । बुध, अवगमने । बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । भोत्सतै । भोत्साते । बुध्यताम् । अबुध्यत । बुध्येत । भुत्सीष्ट । अबोधि । अबुद्ध । अभोत्स्यत । युध, सम्प्रहारे । युध्यते । युयुधे । योद्धा । योत्स्यते । युत्सीष्ट । अयुद्ध । अनोरुध, कामे । रुधेरनूपसृष्टस्यकामेवृत्तस्य दिवादित्वमात्मनेपदित्वञ्च । अनुरुध्यत इत्यादि पूर्ववत् । अण । प्राणने । अनइत्यन्ये अण्यते । आणे । अणिता । अणिष्यते । अणिषतै । अणिषातै । अण्यताम् । आणिष्ट । आणिष्यत । मन, ज्ञाने । मन्यते । मेने । मन्ता । मंसीष्ट अमंस्त । युज, समाधौ । युज्यते । युयुजे । योक्ता । योक्षतै । योक्षातै । सृज, विसर्गे । सृज्यते । ससृजे । स्रष्टा । स्रक्ष्यते । स्राक्षतै । स्राक्षातै । सृज्यताम् । असृज्यत । सृज्येत । सृक्षीष्ट । असृष्ट । अस्रक्ष्यत । लिश, अल्पीभावे लिश्यते । लिलिशे लेष्टा लेक्ष्यते । लेक्षतै । लेक्षातै । लिक्षीष्ट । अलिक्षत । अलेक्ष्यत । पदादयोऽनुदात्तेत आत्मनेभाषा अणयति वर्जमनुदात्ताः ॥ अथागणान्तात्परस्मैपदिनोऽष्टषष्टिः । राधो, अकर्मकाद्वृद्धावेव । एवकारो भिन्नक्रमः । अस्मादकर्मकादेवश्यन् । उदाहरणं वृद्धाविति राध्यति । रराध । रराधतुः हिंसार्थस्य राधस्सकर्मकत्वाद्राधो हिंसायामिति न प्रवर्त्तते । रराधिथ । राद्धा । रात्स्यति । रात्साति । रात्साति । राध्यतु । अराध्यत् । राध्येत् । राध्यात् । अरात्सीत् । अराद्धाम् । अरात्सुः । अरात्स्यत् । व्यध, ताडने । विध्यति । ग्रहिज्येति सम्प्रसारणम् । विध्यतः । विध्यन्ति । विव्याध । विवि-

(१) वृद्धावित्युपलक्षणम् । अतएव राध्यत्योदनः स्वयमेवेति कर्मवत्सूत्रस्थभाष्यप्रयोगोपपत्तिरिति राध्यति सिध्यतीत्यर्थः ।

धतुः । विव्यद्ध । विव्यधिथ । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् । अव्यत्स्यत् । पुष, पुष्टौ । पुष्यति । पुपोष । पोष्टा । पोक्ष्यति । पुष्यतु । अपुष्यत् । पुष्येत् । पुषादीत्यङ् । अपुषत् । अपोक्ष्यत् । शुष, शोषणे । अशुषत् । तुष, प्रीतौ । अतुषत् । दुष, वैकृत्ये । दुष्यति । अदुषत् । श्लिष, आलिङ्गने । श्लिष्यति । शिश्लेष । श्लेष्टा । श्लेक्ष्यति । श्लेच्यति । श्लेक्षाति । श्लिश्यतु । अश्लिष्यत । श्लिष्येत । श्लिष्यात् ।

## श्लिष आलिङ्गने ॥ ३ । १ । ४६ ॥

विभक्तोऽयं भाष्ये । श्लिषः क्सः सचालिङ्गन एव । आश्लिक्षत् । आलिङ्गनं परिष्वङ्गः । अन्यत्रपुषादित्वादङ् । अश्लिषत् । अश्लेक्ष्यत् । शक, विभाषितोमर्षणे । अयं मर्षणे दिवादिः । विभाषित । इत्युभयपदी । शक्यति । शक्यते । शशाक । शेकिथ । शशकथ । शेके । शक्ता । शक्ष्यति । शक्ष्यते । शाक्षति । शाक्षाति । अशकत् । अशक्ष्यत् । अयं सेडित्येके ॥ ञिष्विदा गात्रप्रक्षरणे । गात्रप्रक्षरणं घर्मस्रुतिः ष्विदेति केचित् । स्विद्यति । सिष्वेद । सिष्वेदिथ । स्वेत्ता । स्वेत्स्यति । स्वेत्सति । स्वेत्साति । स्विद्यतु । अस्विद्यत् । स्विद्येत् । स्विद्यात् । अस्विदत् । अस्वेत्स्यत् । क्रुध, क्रोधे । क्रुध्यति । चुक्रोध । क्रोद्धा । अक्रुधत् । क्षुध, बुभुक्षायाम् । क्षुध्यति । चुक्षोध । अक्षुधत् । शुध, शौचे । शुध्यति । शुशोध । शोद्धा । अशुधत् ।

---

( २ ) "श्लिष" अस्मात्परस्यानिट श्लेः क्सः पुषाद्यङोपवादो न क्षिणः पुरस्तादपवादन्यायात् ततः आलिङ्गने श्लिषश्च्लेरालिङ्गने एव क्सो नान्यत्र योगविभागसामर्थ्याच्छलइगुपधेत्यस्याप्ययं नियमः । अश्लिक्षत् कन्यां देवदत्तः । आलिङ्गनएवेतिकिम् समश्लिषज्जतु काष्ठम् । प्रत्यासत्त्याविह श्लिषिः । कर्मणिअनालिङ्गने सिज् व न तु क्सः । एक वचने च्चिण-अश्लेषि । अश्लिक्षातास् । इति दीक्षितादयः ।

षिधु, संराधौ। सिध्यति। सिसेध। असिधत्। राधादयोऽनुदात्ताः उदात्तेतः परस्मैपदिनः॥ रध, हिंसासंराध्योः। संराद्धिः पाकः। रध्यति - ररन्ध। रधिजभोरचि, इति नुम्। ररन्धतुः।

रधादिभ्यश्च ॥ ७। २। ४५ ॥

रधादिभ्यः परस्य वलाद्यार्धधातुकस्येड्वा। ररन्धिथ। ररद्ध। ररन्धिव। रेध्व। रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह्
ररन्धिम। रेध्म।

नेड्यलिटि रधेः ॥ ७। १। ६२ ॥

इडादावलिटि रधे र्नुम् न। रधिता। रद्धा। रधिष्यति। रत्स्यति। राधिषति। राधिषाति। रधिषति। रधिषाति। रात्सति। रात्साति। रध्यति। रध्याति। रध्यतु। अरध्यत्। रध्येत्। रध्यात्। अङि। रधिजभोरचि, इति नुम्। अनिदितामितिनलोपः। अरधत्। अरधताम्। अरधिष्यत्। अरत्स्यत्। णश, अदर्शने। नश्यति। ननाश। नेशतुः। नेशुः। इड्विकल्पः। नेशिथ। अनिट्पक्षे। मस्जिनशोर्झलि, इति थलि नुमि। ननंष्ठ। नेशथुः। नेश। ननाश। ननश। नेशिव। नेश्व। नेशिम। नेश्म। एवमन्यस्मिन्नपि झलादौ। नशिता। नंष्टा। नशिष्यति। नंक्ष्यति। नङ्क्षति। नङ्क्षाति। अनशत्। अनशिष्यत्। अनङ्क्ष्यत्। प्रणश्यति।

नशेः षान्तस्य ॥ ८। ४। ३६ ॥

षान्तस्य नशे र्नस्य णो न। प्रनंष्टा। प्रनंक्ष्यति। नशिष्यति। तृप, प्रीणने। इहप्रीणनंतृप्तिस्तर्पणञ्च। तृप्यति। ततर्प। ततृपतुः।

(१)-अन्तग्रहणं भूतपूर्वषान्तत्वाश्रयणार्थम्।
(२)-नाग्निस्तृप्यति काष्ठानाम्। पितृनताप्सीदित्युभयथा दर्शनात्।

थलि, रधादिभ्यश्चेति इट् । ततर्पिथ । पक्षे । तत्रप्थ । अनुदात्तस्य चर्दुपधस्य, इति थल्यनिट्पक्षेऽमागमविकल्पः । कृते च तस्मिन् यथादेशः । ततर्पथ । एवं सर्वत्र वलादावार्द्धधातुके । तर्पिता । त्रप्ता । तर्प्ता । तर्पिष्यति । तर्प्स्यति । त्रप्स्यति । तर्पिषति । तर्पिषाति । त्रप्सति । त्रप्साति । तर्प्सति । तर्प्साति । तृप्यति । तृप्याति । तृप्यतु । अतृप्यत् । तृप्येत् । तृप्यात् । लुङि । पुषादित्वादङ् । ( स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः ) इतिसिचूपक्षे । अतर्पीत् । अतर्पिष्टामिति । नेटीति वृद्धिनिषेधः । अनिट्पक्षे त्वमागमे । अत्राप्सीत् । अन्यत्र, अताप्र्सीत् । उभयत्र वदव्रजेतिवृद्धिः ॥ अतृपत् अतर्पिष्यत् । अत्रप्स्यत् । अतर्प्स्यत् । दृप, हर्षमोहनयोः । मोहनं-गर्वः । दृप्यतीत्यादि पूर्ववत् । द्रुह, जिघांसायाम् । द्रुह्यति । दुद्रोह । दुद्रोहिथ । अनिट्पक्षे । वा द्रुहमुहेति वा घः । पक्षे ढः । दुद्रोग्ध । दुद्रोढ । द्रोहिता । द्रोग्धा । द्रोढा । द्रोहिष्यति । ध्रोक्ष्यति । ढत्वपक्षेऽपि इदमेव रूपम् । द्रोहिषति । द्रोहिषाति । ध्रोक्षति । ध्रोक्षाति । द्रुह्यतु । अद्रुह्यत् । द्रुह्येत् । द्रुह्यात् । अद्रुहत् । अद्रोहिष्यत् । अध्रोक्ष्यत् । मुह, वैचित्त्ये । मुह्यति । मुमोह । मुमोहिथ । मुमोग्ध । मुमोढ । मोहिता । मोग्धा । मोढा । मोहिष्यति । मोक्ष्यति । अमुहत् । ष्णुह, उद्गिरणे । स्नुह्यति । सुष्णोह । सुष्णोहिथ । सुष्णोग्ध । सुष्णोढ । सुष्णुहिव । सुष्णुह्म । स्नोहिता । स्नोग्धा । स्नोढा । स्नोहिष्यति । स्नोक्ष्यति । अस्नुहत् । ष्णिह, प्रीतौ । स्निह्यति । सिष्णेह । सिष्णेहिथ । अस्निहत् । वृत् । रधादयः समाप्ताः । अत्र वृत्करणं रधादिपरिसमाप्त्यर्थम् । पुषादयस्त्वाऽऽगणान्तात् । शमु, उपशमे ।

### शमामष्टानां दीर्घः श्यनि ॥ ७ । ३ । ७४ ॥

अष्टानां शमादीनां दीर्घः श्यनि । प्रणिशाम्यति । शशाम । शेमतुः । शेमुः । शेमिथ । शमिता । अशमत् । तमु, काङ्क्षायाम् । ताम्यति । तताम । तेमतुः । अतमत् । दमु, उपशमे । उपशमेऽत्र णिजन्तस्य तेन सकर्मकः । दाम्यति । अदमत् । श्रमु, तपसि खेदे च । श्राम्यति । अश्रमत् । भ्रमु, अनवस्थाने । भ्राम्यति । वा भ्राशेति श्यन्वा । भ्रमति । अभ्रमत् । क्षमू, सहने । क्षाम्यति । चक्षाम । चक्षमिथ । चक्षन्थ । चक्षमिव । चक्षण्व । क्षमिता । क्षन्ता । क्षमिष्यति । क्षंस्यति । क्षांसति । क्षांसाति । क्षाम्यतु । अक्षाम्यत् । अक्षमत् । क्लमु, ग्लानौ । क्लाम्यति । क्लामति । वा भ्राशेत्यादिना श्यन्विकल्पः । शपि 'ष्ठिवुक्लमु, इत्येव श्यन्यपि दीर्घे सिद्धेऽस्य शमादिपाठो घिनुणर्थः । अक्लमत् । मदी, हर्षे । माद्यति । ममाद । मेदतुः । मेदिथ । मदिता । मदिष्यति । मादिषति । मादिषाति । अमदत् । अमदिष्यत् । इत्यष्टौ शमादयः ॥ असु, क्षेपणे । अस्यति । आस । असिता । असिष्यति । अस्यतु । अस्यतिवक्तीति लुङ्यङि कृते ।

### अस्यतेस्थुक् ॥ ७ । ४ । १७ ॥

अस्यतेस्थुगङि । आस्थत् । आस्थताम् । पुषादित्वादङि सिद्धेऽस्यतिग्रहणमात्मनेपदार्थम् । तच्च कर्मकर्त्तरि, उपसर्गादस्यत्यूह्योर्वा वचनमिति च । पर्यास्थत । यसु, प्रयत्ने ।

### यसोऽनुपसर्गात् ॥ ३ । १ । ७१ ॥

अनुपसर्गाद्यसेः श्यन्वा । यस्यति । यसति ।

संयसश्च ॥ ३ । १ । ७२ ॥

सम्पूर्वाद्यसेः श्यन्वा । संयस्यति । संयसति । अनुपसर्गात्किम् । प्रयस्यति । ययास । येसतुः । येसुः । यसिता । यसिष्यति । यासिषति । यासिषाति । यस्यतु । अयस्यत् । यस्येत् । यस्यात् । अयसत् । अयसिष्यत् । जसु, मोक्षणे । जस्यति । अजसत् । तसु, उपक्षये । दसु, च । तस्यति । अतसत् । दस्यति । अदसत् । वसु, स्तम्भे । वस्यति । ववास । ववसतुः । नशसददेतिनिषेधः । अवसत् । बकारादिरयमित्येके । तेषां मते । बेसतुः । बेसुः । व्युष, विभागे । व्युष्यति । अव्युषत् । ओष्ठ्यादिर्दन्त्यान्तोऽयमित्येके । अपरे तत्र यकारं ब्रुवते । प्लुष, दाहे । प्लुष्यति । अप्लुषत् । पूर्वत्रपाठश्चिन्त्यः । बिस, प्रेरणे । बिस्यति । बिवेस । अबिसत् । कुस, संश्लेषणे । कुस्यति । अकुसत् । बुस, उत्सर्गे । बुस्यति । अबुसत् । मुस, खण्डने । मुस्यति । मुमोस । अमुसत् । मसी, परिणामे । परिणामो विकारः । मस्यति । ममास । अमसत् । आद्यन्तव्यत्यासेन समीत्येके । सम्यति । असमत् । लुठ, विलोडने । लुठ्यति । अलुठत् । उच, समवाये । उच्यति । उवोच । ऊचतुः । ओचिता । ओचिष्यति । ओचिषति । ओचिषाति । उच्यतु । औच्यत् । उच्येत् । औचत् । मा भवानुचत् । भृशु, भ्रंशु, अधःपतने । भृश्यति । बभर्श । अभृशत् । अनिदितामिति नलोपः । भ्रश्यति । अभ्रशत् । वृश, वरणे । वृश्यति । अवृशत् । कृश, तनूकरणे । कृश्यति । अकृशत् । ञितृषा, पिपासायाम् । तृष्यति । अतृषत् । हृष, तुष्टौ । इगन्तत्वैवर्जयित्वा औवादिकवत् । हृष्यति । अहृषत् । रुष, रिष, हिंसायाम् । रुष्यति । रिष्यति । तीषसहेति तादाविड्विकल्पः । रोषिता । रोष्टा । रेषिता । रेष्टा । अरुषत् । अरिषत् । डिप, क्षेपे ।

भ्रेशतुः

इकार का लोप इसी का समुच्चय बनता है

कुप, क्रोधे। गुप, व्याकुलत्वे। युप, रुप, लुप, विमोहने। युप्यति। रुप्यति। लुप्यति। अनिदुसु तौदादिकेन लिपिना साहचर्यात्तौदादिकस्य लुप्लृ छेदन इत्यस्यैव ग्रहणादयं सेडेव। लोपिता। अलुपत्। लुभ, गार्ध्ये। गार्ध्यमाकाङ्क्षा। तीषसहेतीड्विकल्पः। लोभिता। लोब्धा। लोभिष्यति। अलुभत्। क्षुभ, सञ्चलने। क्षुभ्यति। अक्षुभत्। णभ, तुभ, हिंसायाम्। नभ्यति। ननाभ। नेभतुः। अनभत्। तुभ्यति। अतुभत्। क्लिदू, आर्द्रीभावे। क्लिद्यति। चिक्लेद। चिक्लेदिथ। चिक्लेत्थ। क्लेदिता। क्लेत्ता। ञिमिदा, स्नेहने। मिदेर्गुणः। मेद्यति। अमिदत्। ञिक्ष्विदा, स्नेहनमोहनयोः। क्ष्विद्यति। अक्ष्विदत्। ऋधु, वृद्धौ। ऋध्यति। आनर्ध। आनृधतुः। आर्धत्। आर्धिष्यत्। गृधु, अभिकाङ्क्षायाम्। अगृधत्। वृत्। दिवादयः पुषादयश्च वृत्ताः। अन्ये तु पुषादेस्समाप्त्यर्थं वृत्करणम्। दिवादयस्त्वपरिसमाप्ता इत्याहुः। तेन क्षीयते। मृग्यति इत्यादिसिद्धिरिति।

---

इति श्यन्विकरणो दिवादिगणः समाप्तः।



# अथ स्वादिगणः ॥

षुञ्, अभिषवे । अभिषवः-स्नपनं पीडनं स्नानं सुरासंधानं च । सुरासंधानं सुरोत्पादनप्रकारः । तत्र स्नानेऽयमकर्मकः ।

स्वादिभ्यः श्नुः ॥ ३ । १ । ७३ ॥

स्वादिभ्यः श्नुः कर्त्रर्थे सार्वधातुके परे । सुनोति । सुनुतः । हुश्नुवोरितियण् । सुन्वन्ति । सुनोषि । लोपश्चास्येति उलोपो वा । सुन्वः । सुनुवः । सुन्मः । सुनुमः । सुनुते । सुन्वाते । सुन्वते । सुषाव । सुषुविव । सुषुवे । सोता । सोष्यति । सोष्यते । सौषति । सौषाति । सौषतै । सौषातै । सुनोतु । सुनुतात् । सुनु । सुनुताम् । असुनोत् । सुनुयात् । सुन्वीत । सूयात् । सोषीष्ट । असावीत् । असोष्ट । असोष्यत् । असोष्यत ।

सुनोतेः स्यसनोः ॥ ८ । ३ । ११७ ॥

सुनोतेः सस्य मूर्द्धन्यादेशो न स्यसनोः । विसोष्यति । षिञ्, बन्धने । सिनोति । विसिनोति । सिषाय । सिष्ये । सेता । सेष्यति । शिञ्, निशाने । शिनोति । शिनुते । शेता । डुमिञ्, प्रक्षेपणे । मिनोति । मिनुते । मीनातिमिनोतीत्यात्वम् । ममौ । मिम्यतुः । मिम्युः । ममाथ । ममिथ । मिम्ये । मिम्याते । माता । मिनोतु । मीयात् । मासीष्ट । अमासीत् । अमामिष्टाम् । अमास्त । अमास्यत चिञ्, चयने । चिनोति । चिनुतः । चिनुते ।

## विभाषा चेः ॥ ७ । ३ । ५८ ॥

अभ्यस्तात्परस्य चिनोतेश्चस्य वा कुत्वं सनि लिटि च। प्रणिचिकाय। चिचाय। चिक्ये। चिच्ये। चेता। चेष्यति। चेष्यते। चैषति। चैषाति। चैषतै। चैषातै। चिनोतु। चिनुताम्। अचिनोत्। अचिनुत। चिनुयात्। चिन्वीत। चीयात्। चेषीष्ट। अचैषीत्। अचेष्ट। अचेष्यत्। अचेष्यत। स्तृञ्,आच्छादने। स्तृणोति। स्तृणुते। तस्तार। तस्तर्थ। तस्तरे। स्तर्ता। स्तरिष्यति। स्तरिष्यते। ऋद्धनोरितीट्। स्तृणोतु। स्तृणुताम्। गुणोर्तीतिगुणः। स्तर्यात्।

## ऋतश्च संयोगादेः ॥ ७ । २ । ४३ ॥

संयोगादेर्ऋदन्तात्परयो लिङ्सिचोरिड् वा ताङि। स्तरिषीष्ट। पक्षे। स्तृषीष्ट। अस्तरिष्ट। अस्तृत। अस्तार्षीत्। अस्तार्ष्टाम्। कृञ्,हिंसायाम्। कृणोति। कृणुते। चकार। चक्रे। कर्त्ता। करिष्यति। करिष्यते। कार्षति। कार्षाति। कार्षतै। कार्षातै। कृणोतु। कृणुताम्। अकृणोत्। अकृणुत। कृणुयात्। कृण्वीत। रिङ्शयेतिरिङादेशः। क्रियात्। कृषीष्ट। अकार्षीत्। अकृत। अकरिष्यत्। अकरिष्यत। वृञ्,वरणे। वृणोति। वृणुते। ववार। ववृनुः।

## बभूथाततन्थजगृभ्मववर्थेति निगमे ॥ ७ । २ । ६४ ॥

बभूथेत्यादाविडभावो निपात्यते निगमे। तेन भाषायां थलीट्। ववरिथ। ववृव। ववृम। वव्रे। वरिता। वरीता। वरिष्यति। वरीष्यति। वरिष्यते। वरीष्यते। वारीषति। वारीषाति। वारिषति। वारिषाति। वृणोतु। वृणुताम्। अवृणोत्। अवृणुत। वृणुयात्। वृण्वीत। व्रियात्।

लिङ्सिचोरात्मनेपदेषु ॥ ७ । २ । ४२ ॥

वृतो लिङ्सिचोरिड् वाऽऽत्मनेपदेषु परतः ।

न लिङि ॥ ७ । २ । ३९ ॥

वृतो लिङइटो न दीर्घः। वरिषीष्ट । वृषीष्ट। अवारीत्। अवरिष्ट। अवरीष्ट । अवृत । अवरिष्यत् । अवरीष्यत् । धुञ्, कम्पने । धुनोति । धुनुते । अधौषीत् । अधोष्यत् । दीर्घान्तोऽपीत्येके । धूनोति । धूनुते । दुधाव । दुधुवे । दुधुविथ । दुधोथ । दुधुविव । धविता । धोता । धविष्यति । धोष्यति । धविषति । धविषाति धौषति । धौषाति- धाविषतै । धाविषातै । धौषतै । धौषातै । धूनोतु अधावीत् । अधविष्यत । अधोष्यत । स्वादय उभयतोभाषा वृञ्वर्जमनुदात्ताः। अथ परस्मैपदिनो नव । दुदु, उपतापे । दुनोतीत्यादि धुनोतिवत् । हि, गतौ वृद्धौ च । हिनोति ।

हिनुमीना ॥ ८ । ४ । १५ ॥

उपसर्गस्थान्निमित्तात्परस्य हिनु मीना इत्येतयोर्नस्य णः। प्रहिणोति ।

हेरचङि ॥ ७ । ३ । ५६ ॥

अभ्यासात्परस्य हिनोति हस्य कुत्वं नतु चङि । जिघाय । जिघ्यतुः । जिघेथ, (जिघ्यिथ) हिनोतु । अहैषीत् । पृ, प्रीतौ । पृणोति । पर्त्ता । अपार्षीत् । स्पृ, प्रीतिपालनयोः । प्रीतिचलनयोरित्यन्ये । स्पृणोति । पस्पार । स्पर्य्यात् । अस्पार्षीत् । स्मृ, इत्येके । स्मृणोति । सस्मार । सस्मर्थ । स्मर्य्यात् । पृणोत्यादयश्छान्दसाइत्याहुः । आप्लृ, व्याप्तौ ।

आप्नोति । आप्नुतः । आप्नुवन्ति । आप्नुवः । आप्ता । आप्स्यति । आप्सति । आप्साति । आप्नोतु । आप्नुहि । लृदित्वादङ् । आपत् आप्स्यत् । शक्लृ, शक्तौ । शक्नोति । शशाक । अशकत् । अशक्ष्यत् । राध, साध, संसिद्धौ । राध्नोति । रराध ।

राधो हिंसायाम् ॥ ६ । ४ । १२३ ॥

हिंसायामर्थे राधेरात एत्वमभ्यासलोपश्च किति लिटि सेटि थलि च । अपरेधतुः । रेधुः । रेधिथ । राद्धा । साध्नोति । साद्धा । आसात्सीत् । असाद्धाम् । दुनोतिप्रभृतयोऽनुदात्ताः परस्मैभाषाः॥ अथ द्वावनुदात्तौ । अशू, व्याप्तौ संघाते च । अश्नुते । अश्नुवाते ।

अश्नोतेश्च ॥ ७ । ४ । ७२ ॥

दीर्घीभूतात्परस्याश्नोतेर्नुट् । आनशे । अशिता । अष्टा । अशिष्यते । अक्ष्यते । आशिषते । आशिषाते । आक्षते । आक्षाते । अश्नुताम् । आश्नुत । अश्नुवीत । अशिषीष्ट । अक्षीष्ट । आशिष्ट । आष्ट । आशिष्यत । आक्ष्यत । ष्टिघ, आस्कन्दने । स्तिघ्नुते । तिष्टिघे । स्तेघिता । अस्तेघिष्ट ।

अथाऽऽगणान्तात्परस्मैपदिनः । तिक । तिग । गतौ च । चकारादास्कन्दने इत्यनुषज्यते । तिक्नोति । तिग्नोति । तितेक । तेगिता । तेगिष्यति तेगिषति । तेगिषाति । तिग्नोतु । अतिग्नोत् । तिग्नुयात् । तिग्यात् अतेगीत् । अतेगिष्यत् । षघ, हिंसायाम् । सघ्नोति । ञिधृषा,

( १ ) आभ्यस्तयोरित्यतआतः इत्यनुवर्तते ।

( २ ) अथ परस्मैपद्यपीति उपदेशेऽत्रतदिति सूत्रस्थभाष्यस्वरसः ।

प्रागल्भ्ये । धृष्णोति । दधर्ष । धर्षिता । दम्भु, दम्भने । दम्भो लोकार्जवार्थमेव कर्म्मानुष्ठानम् । दभ्नोति । अनिदितामिति नलोपः । ददम्भ ।(दम्भेरेत्वं वक्तव्यम् )देभतु । देभुः । दभ्यात् । ऋधु,वृद्धौ। ऋध्नोति । आनर्द्ध । अर्द्धिता । अर्द्धिष्यति । अर्द्धिषदि । अर्द्धिषाति । ऋध्नोतु-आर्ध्नोत् । ऋध्नुयात् । ऋध्यात् । आर्धीत् । आर्धिष्यत् । तृप, प्रीणन-इत्येके । क्षुभ्नादित्वाण्णत्वं न । तृप्नोति । अतर्पीत् । (छन्दसि)ग० । आगणान्ताच्छन्दसीत्यर्थः । अह्, व्याप्तौ । अह्नोतीत्यादि । दघ, घातने पालने च । दघ्नोति । ददाघ । देघतुः । देघुः । देघिथ । दघिता । दघिष्यति । दाघिषति । दाघिषाति । दघ्नोतु । अदाघीत् अदघीत् । अदघिष्यत् । चमु, भक्षणे । चम्नोति । रि, क्षि, चिरि, जिरि, दाश, दृ, हिंसायाम् । रिणोति । क्षिणोति ।[1]अयं भाषायामपीत्येके । ऋक्षीत्येकएवाजादिरित्यन्ये । ऋक्षिणोति । दाश्नोति । दृणोति । चिचिराय । चिचिरियतुः । दृतृ ॥

इति श्नुविकरणः स्वादिगणः समाप्तः ।



(१) अभ्यासलोपोऽपि लाक्षणिकत्वाद् बोध्यः । केचित्त्वत्र कित्त्वं विकल्पयन्ति तन्मते ददम्भतुरित्याद्यपि ।

# अथ तुदादयः

तुद, व्यथने ।

तुदादिभ्यः शः ॥ ३ । १ । ७७ ॥

तुदादिभ्यः शः कर्त्रर्थे सार्वधातुके । तुदति । तुदते । तुतोद । तुतुदे । तोत्ता । तोत्स्यति । तोत्स्यते । अतौत्सीत् । अतुत्त । अतोत्स्यत् । अतोत्स्यत । णुद, प्रेरणे । नुदति । नुदते । दिश, अतिसर्जने । अतिसर्जनं दानम् । दिशति । दिशते । देष्टा । देक्ष्यति । देक्ष्यते । देष्टि । दिक्षाति । दिक्षते । दिक्षातै । दिक्षीष्ट । अदिक्षत् । अदिक्षत । भ्रस्ज, पाके । शस्य सार्वधातुकमपिदिति ङित्त्वाद् ग्रहिज्यादिना सम्प्रसारणम् । पररूपत्वम् । पूर्वस्श्चुत्वेन शः । ततो झलांजशझशीति शस्य जः । भृज्जति । भृज्जते ।

भ्रस्जो रोपधयोरमन्यतरस्याम् ॥ ६ । ४ । ४७ ॥

भ्रस्जो रोपधयोश्च स्थानेऽरम्वाऽऽर्द्धधातुके । बभर्ज । बभर्जतुः । बभर्जिथ । बभर्ष्ठ । रमभावे । बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । बभ्रष्ठ । बभर्जे । बभर्जाते । बभर्जिरे । बभर्जिषे । बभ्रज्जे । भर्ष्टा । भ्रष्टा । भर्क्ष्यति । भ्रक्ष्यति । भर्क्षति । भर्क्षाति । भर्क्षते । भर्क्षातै । क्ङितिरमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन । भृज्ज्यात् ।

(१) रम्यकार उच्चारणार्थः । रोपधेत्यत्र रोपधयोःस्थाने प्रसङ्गे रम्प्रयुज्यते रोपधे न प्रयुज्यते इत्यर्थः ।

भृज्ज्यास्ताम्। भक्षीष्ट। भ्रक्षीष्ट। अभार्क्षीत्। अभ्राक्षीत्। अभर्ष्ट। अभ्रष्ट। अभर्क्ष्यत्। अभ्रक्ष्यत्। अभर्क्ष्यत। अभ्रक्ष्यत। क्षिप, प्रेरणे। क्षिपति। क्षिपते। क्षेप्ता। क्षिप्सीष्ट। अक्षैप्सीत्। अक्षिप्त। कृष, विलेखने। कृषति। कृषते। क्रष्टा। कर्ष्टा। क्रक्ष्यति। कर्क्ष्यति। कृष्यात्। कृक्षीष्ट। स्पृशमृशेति सिज्वा। सिचि अम्वा। पक्षे क्सः। अक्राक्षीत्। अकार्क्षीत्। अकृक्षत्। अकृष्ट। अकृक्षत। अक्रक्ष्यत्। अक्रक्ष्यत। अकर्क्ष्यत्। अकर्क्ष्यत। षट् तुदादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः। ऋषी, गतौ। परस्मैपदी। ऋषति। आनर्ष। जुषी, प्रीतिसेवनयोः। उदात्ताश्चत्वारोऽनुदात्तेत आत्मनेपदिनः। जुषते। जुजुषे। जोषिता। जोषिष्यते। जोषिषतै। जोषिषातै। जुषताम्। अजुषत। जुषेत। जोषिषीष्ट। अजोषिष्ट। अजोषिष्यत। ओविजी, भयचलनयोः। प्रायेणायमुत्पूर्वः। उद्विजते। उद्विविजे। उद्विविजाते। उद्विविजिरे।

## विज इट्॥ १। २। २॥

विजेः पर इडादिप्रत्ययो ङिद्वत्। उद्विजिता। उद्विजिष्यते। उद्विजिषीष्ट। उदविजिष्ट। ओलजी, ओलस्जी, व्रीडायाम्। लजते। लेजे। लज्जते। ललज्जे। अथ परस्मैपदिनो दशोत्तरशतम्। ओव्रश्चू, छेदने। वृश्चति। वव्रश्च। वव्रश्चतुः। वव्रश्चिथ। वव्रष्ठ।

(१) लिङ्सिचाविति कित्वादम्।

(२) संयोगान्तत्वेन लिटः कित्वाभावा द्ग्रहिज्येत्यादिना सम्प्रसारणम्। अभ्यासस्य-लिट्य भ्यास स्येत्यादिना नसम्प्रसारणे ति निषेधाद्रेफस्य सम्प्रसारणम्, उरदत्त्वस्याऽऽ-ङ्गत्वाद्ङ्गाक्षिप्तप्रत्ययेन परनिमित्तत्वादचः परस्मिन्निति स्थानिवत्त्वेन सम्प्रसारणपरत्वात्।

व्रश्चिता । व्रष्टा । व्रश्चिष्यति । व्रक्ष्यति । व्रश्चिषति । व्रश्चिषाति । व्रक्षति । व्रक्षाति । वृश्चतु । अवृश्चत् । वृश्चेत् । वृश्च्यात् । अव्रश्चीत् । अव्राक्षीत् । व्यच, व्याजीकरणे । विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । व्याचिषति । व्यचिषाति । विचतु । अविचत् । विचेत् । विच्यात् । अव्याचीत् । अव्यचीत् । व्यचेः कुटादित्वमनसीत्यञ्णित्प्रत्यये । विधीयमानं ङित्त्वमनसीति पर्युदासेन तत्सदृशे कृतीति नेह । अव्यचिष्यत् । उछि, उञ्छे । उञ्छति । उञ्छाञ्चकार । उञ्छिता । उच्छी, विवासे । उच्छतीत्यादि । ऋच्छ, गतीन्द्रियप्रलयमूर्तिभावेषु । ऋच्छति । ऋच्छत्यॄतामिति गुणः । द्विहल्ग्रहणमनेकहलुपलक्षणमिति नुडागमः । आनर्च्छ । ऋच्छिता । ऋच्छिष्यति । मिच्छ, उत्क्लेशे उत्क्लेशः पीडा । मिच्छति । मिमिच्छ । अमिच्छीत् । जर्ज,चर्च,झर्झ,परिभाषणभर्त्सनयोः । जर्जति । चर्चति । झर्झति । त्वच, सम्वरणे । त्वचति । तत्वाच । ऋच,स्तुतौ । ऋचति । आनर्च । आनृचतुः । उब्ज,आर्जवे । उब्जति । उब्जाञ्चकार । उज्झ, उत्सर्गे । उज्झति । उज्झाञ्चकार । लुभ, विमोहने । विमोहनमाकुलीकरणम् । लुभति । लुलोभ । लोभिता । तीषसहेतीड्विकल्पः । लोब्धा । लोभिषति । लोभिषाति । लुभतु । अलुभत् । लुभेत् । लुभ्यात् । अलोभीत् । अलोभिष्यत् । रिफ, कत्थनयुद्धनिन्दाहिंसादानेषु । रिफति । रिरेफ । रिह, इत्येके । रिहति । रिरेह । तृप,तृम्प,तृप्तौ, तृपति । ततर्प । तर्पिता । तृम्पति । तृप्यात् । अनिदितामित्युपधा

(१) अनृच्छ इतिपर्य्युदासोनास् ।

लोपः। तृप्यात्। स्पृशमृशेति सिचोविकल्पनमङ्पवादं इति पौषादिकस्यैव। अतर्पीत्। तृफ,तृम्फ,इत्येके। शस्य ङित्वादनिदितामिति नलोपे। (शे तृम्फादीनामुपसंख्यानम्) इति नुमागमः। आदिशब्द प्रकारवाची। प्रकारश्च सादृश्यम्,येऽत्र सानुषङ्गाः पठ्यन्ते ते तृम्फादयः। तृम्फति। ततृम्फ। तृम्फिता। आशिषि तृफ्यात्. यासुटः कित्वान्नस्य लोपः। अतृम्फीत्। तुप, तुम्प, तुफ, तुम्फ, हिंसायाम्। तुपति। तुम्पति। तुफति। तुम्फति। तुप्यात्। तुफ्यात्। दृफ, दृम्फ, उत्क्लेशे। दृफति। दृम्फतीत्यादि। ऋफ, ऋम्फ, हिंसायाम्। ऋम्फति। आनर्फ। ऋम्फाञ्चकार। ऋफ्यात्। गुफ, गुम्फ, ग्रन्थे। गुम्फति। जुगुम्फ। उभ, उम्भ, पूरणे। उभति। उम्भति। उवोभ। उम्भाञ्चकार। उभ्यात्। शुभ, शुम्भ, शोभार्थे। शुम्भति। शुशुम्भ। शुशोभ। शुभ्यात्। दृभी, ग्रन्थे। दृभति। ददर्भ। अदर्भीत्। अदर्भिष्यत्। चृती, हिंसाग्रन्थनयोः। चृतति। चचर्त। चचृततुः। चचर्तिथ। चर्तिता। चर्तिष्यति। सेऽसिचीति वेट्। चर्त्स्यति। चर्तिषति। चर्तिषाति। चर्त्सति। चर्त्साति। चृततु। अचृतत्। चृतेत्। चृत्यात्। अचर्तीत्। अचर्तिष्यत्। विध। विधाने। विधति। विवेध। विविधतुः। वेधिता। वेधिष्यति। वेधिषति। वेधिषाति। जुड, गतौ। जुडति। जुन। इत्येके। जुनति। मृड, सुखने। मृडति। अमर्डीत्। पृड, च। पृडति। पृण, प्रीणने। पृणति। पपर्ण। वृण, च। वृणति। अवर्णीत्। अवर्णिष्यत्। मृण, हिंसायाम्। मृणति। मर्णिता। तुण, कौटिल्ये। तुणति। तुतोण। पुण, कर्माणि शुभे। पुणति। पोणि-

( १ ) शेमुचादीनामिति सूत्रेभाष्ये शेतृम्पादीनां नुम्वाच्यः। तृम्पति तृम्फतीतिपाठदर्शनादाद्योपि सनकारइति प्रतीयते। मूलन्तु धातुवृत्त्यनुसारीति बोध्यम्।

षति । पोषिषाति । मुष, प्रतिज्ञाने । कुष, शब्दोपकरणयोः । शुन, गतौ । कुष, हिंसागतिकौटिल्येषु । घुष, घूर्ण, भ्रमणे । षुर, ऐश्वर्यदीप्त्योः । सुरति । सुषोर । सोरिता । सोरिष्यति । सोरिषति । सोरिषाति । आशिषि । सूर्यात् । कुर, शब्दे । कुरति ।

## न भकुर्छुराम् ॥ ८ । २ । ७९ ॥

रेफवान्तस्य भसंज्ञकस्य कुर्छुरोश्चोपधाया न दीर्घः । कुर्यात् । खुर, छेदने । खुरति । चुखोर । खूर्यात् । मुर, संवेष्टने । मुरति । मूर्यात् । क्षुर, विलेखने । घुर, भीमार्थशब्दयोः । पुर, अग्रगमने । वृहू, उद्यमने । वृहति । ववर्ह । ववृहतुः । ऊदित्वादिड्विकल्पः । वर्हिता । वर्ढा । वर्हिष्यति । वर्क्ष्यति । षढोः कस्सीति कत्वम् । वृहतु । अवृहत् । वृहेत् । वृह्यात् । अवर्हीत् । अवृक्षत् । अवर्हिष्यत् । अवर्क्ष्यत् । वृहू, इत्येके । तृहू, स्तृहू, तृंहू, हिंसार्थाः । तृहति, स्तृहति । तृंहति । ततर्ह । तस्तर्ह । ततृंह । तर्हिता । तर्ढा । स्तर्हिता । स्तर्ढा । तृंहिता । तृण्ढा । अतृंहीत् । अतार्ङ्क्षीत् । अतार्ढाम् । इष, इच्छायाम् । इच्छति । इयेष । एषिता । एष्टा । एषिषति । एषिषाति । इच्छतु । ऐच्छत् । इच्छेत् । इष्यात् । ऐषीत् । ऐषिष्यत् । मिष, स्पर्द्धायाम् । मिषति । मिमेष । किल, श्वैत्यक्रीडनयोः । किलति । केलिता । तिल, स्नेहने । तिलति । तेलिष्यति । चिल, वसने । चिलति । चेलिषति । चेलिषाति । चिलतु । चल, विलसने । चलति । इल, स्वप्नक्षेपणयोः । विल, सम्वरणे । बिल, भेदने । णिल, गहने । हिल, भावकरणे । शिल, षिल, उञ्छे । मिल, श्लेषणे । लिख,

( १ ) केचित्तु प्रसिद्धत्वादकृञ एव ग्रहणं नत्वस्य । कुर्य्यादित्युक्ते हि लोकानां कृञ एवोपस्थितिर्भवति न त्वस्येतिभावः ।

अक्षर विन्यासे । लिखति । लिलेख । कुट, कौटिल्ये । कुटति । चुकोट । गाङ्कुटादीति अञ्णित्प्रत्ययस्य ङित्वान्न गुणः । चुकुटिथ । चुकुटथुः । चुकुट । उत्तमे णलि णित्वविकल्पनात्पक्षे ङित्त्वाद् गुणः । चुकोट । चुकुट । कुटिता । कुटिष्यति । कोटिषति । कोटिषाति । कुटिषति । कुटिषाति । अत्र णित्पक्षेऽङित्त्वाद्गुणः । कुटतु । अकुटत् । कुटेत् । कुट्यात् । अकुटीत् । अकुटिष्यत् । पुट, संश्लेषणे । कुच, संकोचने । गुज, शब्दे । गुड, रक्षायाम् । डिप, क्षेपे । छुर, छेदने । अत्र हलि चेति दीर्घस्य, न भकुर्छुरामिति निषेधः । छुर्यात् । स्फुट, विकसने । स्फुटति । पुस्फोट । मुट, आक्षेपमर्दनयोः । त्रुट, छेदने । वा "भ्राशे" ति शविषये वा श्यन् । त्रुट्यति । त्रुटति । तुत्रोट । त्रुटिता । तुट, कलह कर्मणि । तुटति । तुतोट । तुटिता । चुट, छुट, छेदने । जुड, बन्धने । कड, मदे । लुट, संश्लेषणे । कृड, घनत्वे । घनत्वं सान्द्रता । कुड, बाल्ये । पुड, उत्सर्गे । घुट, प्रतिघाते । तुड, तोडने । तोडनं भेदः । थुड, स्थुड, संवरणे । थुडति । तुथोड । तुस्थोड । खुड, छुड, इत्यन्ये । कुड, संघात इत्येके । स्फुर, स्फुल, सञ्चलने । स्फुर, स्फुरणे । स्फुल, संचलने इत्येके ।

स्फुरतिस्फुलत्योर्निर्निविभ्यः ॥ ८ । ३ । ७६ ॥

निरादिभ्यः स्फुरतिस्फुलत्योः सस्य वा मूर्द्धन्यः । निःष्फुरति । निस्स्फुरति । स्फर । इत्येके । स्फरति । पस्फार । स्फुड, चुड, व्रुड, सम्वरणे । क्रुड, भृड, निमज्जन इत्येके । अथादय उदात्ता उदात्तेतः परस्मैभाषा दशोत्तरशतं समाप्ताः ॥ अथात्मनेपदी सेद् । गुरी, उद्यमने । गुरते । जुगुरे । गुरिता । गुरिष्यते । गोरिषतै ।

गोरिषातै । गुरिषतै । गुरिषातै । गुरताम् । अगुरत । गुरेत । गुरिषीष्ट । अगुरिष्ट । अगुरिष्यत इतश्चत्वारः परस्मैपदिनः । णू, स्तवने । नुवति । नुनाव । अनुवीत् । धू, विधूनने । धुवति । दुधाव । दुधुवतुः । दुधुवुः । धुविता । अधुवीत् । गु, पुरीषोत्सर्गे । जुगुविथ । जुगुथ । गुता । गुष्यति । गौषति । गौषाति । गुषति । गुषाति । अगुषीत् । ह्रस्वादङ्गादिति सिज्लोपः । अगुताम् । अगुषुः । ध्रु, गतिस्थैर्ययोः । ध्रुव, इत्येके । ध्रुवतीत्यादि गुवतिवत् । द्वितीयस्तु सेट् । दुध्रुविथ । ध्रुविता । ध्रुविष्यति । ध्रुव्यात् । अध्रुवीत् । अध्रुविष्टाम् । कूङ् शब्दे । कुविता । अकुविष्ट । कुङ्, शब्दे ह्रस्वान्त इत्यपरे । कुता । अकुत । वृत् ॥ कुटादयः समाप्ताः ॥ पृङ्, व्यायामे । बहुधा व्याङ्पूर्वः । रिङ्शयग्लिङ्क्षु इति रिङ्, इयङ् । व्याप्रियते । व्यापप्रे । पर्त्ता । परिष्यते । पार्षतै । पार्षातै । प्रियताम् । अप्रियत । प्रियेत । पृषीष्ट । अपृत । अपरिष्यत । मृङ्, प्राणत्यागे । ङित्वंस्वरार्थम् ।

म्रियतेर्लुङ् लिङोश्च ॥ १ । ३ । ६१ ॥

म्रियतेः परयोर्लुङ्लिङोः शितःप्रकृतिभूताच्च कर्त्तरि लस्यात्मनेपदम् । ङित्वादेव सिद्धे नियमार्थमिदं तेनान्यत्र परस्मैपदमेव । म्रियते । ममार । मर्त्तासि । मरिष्यति । मार्षति । मार्षाति । म्रियताम् । अम्रियत । म्रियेत । मृषीष्ट । अमृत । अमरिष्यत् । अथ परस्मैपदिनः सप्त । रि, पि, गतौ । रियति । पियति । लघूपधगुणादन्तरङ्गत्वादियङ् । रिराय । पिपाय । रेता । पेता । अपैषीत् । अपेष्यत् । धि, धारणे । धियति । दिधयिथ । दिधेथ । धेता । क्षि, निवासगत्योः । क्षियति । क्षीयात् । अक्षैषीत् । रीत्यादयोऽनुदात्ताः । षू, प्रेरणे । सुवति ।

सुषाव । सुषविथ । सविता । सविष्यति । साविषति । साविषाति । सुवतु । असुवत् । सुवेत् । सूयात् । असावीत् । असविष्यत् । कॄ । विक्षेपे । किरति । ऋत इद्धातोरितीत्वम् । चकार । ऋच्छत्यृतामिति गुणः, चकरतुः । चकरुः । वॄतोवेतीटो वा दीर्घः । करिता । करीता । करिष्यति । करीष्यति । कारिषति । कारिषाति । कारीषति । कारीषाति । किरतु । अकिरत् । किरेत् । कीर्यात् । इत्वे, हलिचेति दीर्घः । अकारीत् । अकारिष्टाम् । अकरिष्यत् । अकरीष्यत् ।

किरतौ लवने ॥ ६ । १ । १४० ॥

लवने उपात्किरतेः कात्पूर्वः सुट् छेदने । उपस्किरति । अडभ्यासव्यवायेऽपि ( सुट्कात्पूर्व इति वक्तव्यम्) उपास्किरत् । उपचस्कार ।

हिंसायां प्रतेश्च ॥ ६ । १ । १४१ ॥

हिंसायामुपप्रतिभ्यां किरतेःकात्पूर्वः सुट् । उपस्किरति । प्रतिस्किरति । गॄ, निगरणे ।

अचि विभाषा ॥ ८ । २ । २१ ॥

ग्रो रेफस्य लो वाऽचि । गिरति । गिलति । जगार । जगाल । गरिता । गरीता । गलिता । गलीता । गीर्यात् । अगालीत् । अगारीत् । अगालिष्टाम् । अगारिष्टाम् । धूआदयउदात्ताः परस्मैपादिनः । दृङ्,आदरे । प्रायेणाऽऽङ् पूर्वः । आद्रियते । रिङ् शयग्लिङ्क्षियतिरिङ् । आदद्रे । आदर्त्ता । ऋद्धनोरितीट् । आदरिष्यते । आदार्षतै । आदार्षातै । आद्रियताम् । आद्रियत । आद्रियेत । आदृषी-

छ । आदृत । आदृषाताम् । धृङ्, अवस्थाने । ध्रियते । अनुदात्तावात्मनेभाषौ । अथ परस्मैपदिनः षोडश । प्रच्छ, ज्ञीप्सायाम् । ग्रहिज्येति सम्प्रसारणम् । पृच्छति । पृच्छतः । पप्रच्छ । पप्रच्छतुः । पप्रच्छुः । पप्रच्छिथ । अनिट् पक्षे । पप्रष्ठ । प्रष्टा । प्रक्ष्यति । प्राक्षति । प्राक्षाति । पृच्छतु । अपृच्छत् । पृच्छेत् । पृच्छ्यात् । अप्राक्षीत् । अप्राष्टाम् । अप्राक्षुः । अप्रक्ष्यत् । वृत् ॥ किरादयः समाप्ताः । सृज, विसर्गे । सृजति । ससर्ज । विभाषा सृजिदृशोरिति थलीड् विकल्पः । सृजिदृशोर्झल्यमकितीत्यमागमः । ससर्जिथ । सस्रष्ठ । स्रष्टा । स्रक्ष्यति । स्राक्षति । स्राक्षाति । सृजतु । असृजत् । सृजेत् । सृज्यात् । अस्राक्षीत् । अस्राक्ष्यत् । टुमस्जो, शुद्धौ । मज्जति । ममज्ज । अनिट् पक्षे । मस्जिनशोर्झलीति नुम् । ( मस्जेरन्त्यात् पूर्वोनुम्वक्तव्यः) संयोगादिलोपः । ममङ्क्थ । ममज्जिथ । मङ्क्ता । मङ्क्ष्यति । मङ्क्षति । मङ्क्षाति । मज्जतु । अमज्जत् । मज्जेत् । मज्यात् । अमाङ्क्षीत् । अमङ्क्ष्यत् । रुजो, भङ्गे । रुजति । रोक्ता । रोक्ष्यति । अरौक्षीत् । अरौक्ताम् । भुजो, कौटिल्ये । भुजतीत्यादि रुजिवत् । छुप, स्पर्शे । छोप्ता । अच्छौप्सीत् । रुश, रिश, हिंसायाम् । रोष्टा । रोक्ष्यति । रेष्टा । रेक्ष्यति । लिश, गतौ । अलिक्षत् । शल इगुपधेति क्सः । स्पृश, संस्पर्शे । स्पृशति । पस्पर्श । स्प्रष्टा । स्पर्ष्टा । स्प्रक्ष्यति । स्पर्क्ष्यति । अस्प्राक्षीत् । अस्पार्क्षीत् । अस्पृक्षत् । विच्छ, गतौ । गुपूधूपेत्यायः । सार्वधातुके नित्यमार्धधातुके वा । विच्छायति । विच्छायाञ्चकार । विविच्छ । विश, प्रवेशने । विशति । वेष्टा । मृश, आमर्शने । आमर्शनं स्पर्शः । मृशतीत्यादि सर्वं स्पृशतिवत् । णुद, प्रेरणे । कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदार्थः पुनः पाठः । नुदतीत्यादि रूपं पूर्ववत् । षद्लृ, विशरणगत्यवसादनेषु । शिति पाघ्रे-

हिंसा ४ दुःख

त्यादिना सीदादेशः । सीदतीत्यादि । अन्यत्र ससादेत्यादि । सर्वं भौवादिकवत् । इह पाठे प्रयोजनं सीदती । सीदन्तीति नुम्विकल्पः । शदूऌ,शातने । पाघ्रेत्यादिना शिति शीयादेशः । शीयत इत्यादि । अन्यत्र । शशाद । शत्तेत्यादि सर्वंभौवादिकवत् । पुनः पाठे प्रयोजनं स्वरभेदः । प्रच्छादयो विच्छिवर्जमनुदात्ताः परस्मैपदिनः । अथ षट् स्वरितेतः । मिल,संगमे । मिल संश्लेषणइति पठितस्येह पुनः पाठः कर्त्रभिप्राये तङर्थः । मिलतीत्यादि पूर्ववत् । मिलते । मिमिले । मेलिता । मेलिष्यते । मेलिषतै । मेलिषातै । मिलताम् । अमिलत । मिलेत । मेलिषीष्ट । अमेलिष्ट । अमेलिष्यत । मुच्लृ, मोचने ।

शे मुचादीनाम् ॥ ७ । १ । ५९ ॥

मुचादीनां नुम्शे परे । मुञ्चति । मुञ्चते । मोक्ता । मोक्ष्यति । मोक्ष्यते । मोचतै । मोचातै । मोचति । मोचाति । मुञ्चतु । मुञ्चताम् । अमुञ्चत् । अमुञ्चत । मुञ्चेत् । मुञ्चेत । मुच्यात् । मुक्षीष्ट । अमुचत् । अमुक्त । अमुक्षाताम् । अमोक्ष्यत् । अमोक्ष्यत । लुप्लृ,छेदने । लुम्पति । लुम्पते । इत्यादि मुञ्चतिवत् । विदॢ, लाभे । विन्दति । विन्दते । विवेद । विविदे । वेत्ता । वेत्स्यति । परिवेत्ता । लिप,उपदेहे । उपदेहो वृद्धिः । लिम्पति । लिम्पते । लेप्ता । लिपिसिचिह्वश्चेत्यङ् परस्मैपदे । अन्यत्रात्मनेपदेष्वन्यतरस्यामिति पक्षेसिच् । अलिपत् । अलिपत । अलिप्त । षिच,क्षरणे । सिञ्चति । सिञ्चते । सिच्यात् । असिचत् । असिचत । असि-

( १ ) पिशधातुरयं दीपनायामपि ।

( २ ) व्याघ्रभूत्यादिमते सेट्कोऽयम् भाष्यादिमतेऽनिट्कः ।

क्त। अभिषिञ्चति। अभ्यषिञ्चत्। अभिषिषेच। मुचादयोऽनुदात्ताः स्वरितेत उभयपदिनः। अथ परस्मैपदिनः। कृती, छेदने। कृन्तति। चकर्त। कर्त्तिता। कर्त्तिष्यति। से सिचीतीड्विकल्पः। कर्त्स्यति। कर्त्तिषति। कर्त्तिषाति। कर्त्सति। कर्त्साति। कृन्ततु। अकृन्तत्। कृन्तेत्। कृत्यात्। अकर्त्तीत्। अकर्त्तिष्यत्। अकर्त्स्यत्। खिद, परिघाते। खिदति। चिखेद। खेत्ता। अयं दैन्ये दिवादौ रुधादौ च। पिश, अवयवे। पिंशति। पिपेश। पेशिता। पेशिष्यति। पेशिषति। पेशिषाति। पिंशतु। अपिंशत्। पिंशेत्। पिश्यात्। अपेशीत्। अपेशिष्यत्। वृत् ॥ मुचादयो वृत्ताः। तुदादयश्च।

इति शविकरणस्तुदादिगणः समाप्तः।

—+*+—

(१) अस्मिन्नेव गणे परस्मैपदिषु पठितस्येत्यर्थः। अस्य पूर्वंपाठस्तु संश्लेषणे कर्त्रभिप्रायेऽपि परस्मैपदार्थः।

नित्यत्वादिति - पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः

# * अथ रुधादिगणः *

रुधिँर्, आवरणे । नव स्वरितेत । इरितश्च ।

रुधादिभ्यः श्नम् ॥ ३ । १ । ७८ ॥

रुधादिभ्यः श्नम् कर्त्रर्थे सार्वधातुके परे । शपोऽपवादः । मित्त्वादचोऽन्त्यात्परः । नित्यत्वाद्गुणात्पूर्वं श्नम् । रुणद्धि । श्नसोरल्लोपः । णत्वस्यासिद्धत्वादनुस्वारः परसवर्णः । तस्यासिद्धत्वा ण्णत्वन्न । नपदान्तेति सूत्रेणानुस्वारपरसवर्णयो रल्लोपो न स्थानिवत् । रुन्धः । रुन्धन्ति । रुन्धे । रोद्धा । रोत्स्यति । रुणद्धु । रुन्धात् । रुन्धि । रुणधानि । रुणधै । अरुणत् । अरुणः । अरुणधम् । अरुधत् । अरौत्सीत् । अरुद्ध । भिदिँर्, विदारणे । भिनत्ति । भिन्ते । भेत्ता । भेत्स्यति । भेत्सति । भेत्साति । भिनत्तु । अभिनत् । अभिनः । अभिनदम् । अभिन्त । भिन्द्यात् । भिद्यात् । अभिदत् । अभैत्सीत् । अभित्त । छिदिँर्, द्वैधीकरणे । छिनत्ति । अच्छिनत् । अच्छिनः । अच्छिदत् । अच्छैत्सीत् । अच्छित्त । रिचिँर्, विरेचने । रिणक्ति । रिङ्क्ते । रिरेच । रिरिचे । रेक्ता । रेक्ष्यते । रेक्षते । रेक्षातै । रिणक्तु । रिङ्क्ताम् । अरिणक् । अरिचत् । अरिक्त । विचिर्, पृथग्भावे । विनक्ति । विङ्क्ते । अविनक् । अविचत् । अवैक्षीत् । अविक्त । युजिँर्, योगे । योक्ता । योक्ष्यति । अयोक्ष्यत् । क्षुदिँर्, संपेषणे । क्षुणत्ति । क्षुन्ते । क्षोत्ता । अक्षुणत् । अक्षुणः । अक्षुदत् अक्षौत्सीत् । अक्षुत्त । अक्षोत्स्यत् । उच्छृदिर्, दीप्तिदेवनयोः । छृणत्ति । छृन्ते । चच्छर्द । चच्छृदतुः । छर्दिता । छर्दिष्यति । छर्त्स्यति ।

छर्दिषति । छर्दिषाति । छर्त्स्यति । छर्त्साति । छृणत्तु । अच्छृणत् । अच्छृणः । छृन्द्यात् । छृद्यात् । छृत्सीष्ट । अच्छृदत् । अच्छर्दीत् । अच्छर्दिष्ट । अच्छर्दिष्यत् अच्छर्त्स्यत् । उतृदिर्, हिंसानादरयोः। तृणत्तीत्यादि छृणत्तिवत् । कृती, वेष्टने । कृणत्ति । कृन्तः । कृन्तन्ति । कृणत्सि । आर्द्धधातुके तौदादिकवत् । ञिइन्धी, दीप्तौ । उदात्तोऽनुदात्तेदात्मनेपदी ।

## श्नान्नलोपः ॥ ६ । ४ । २३ ॥

श्नमःपरस्य नस्य लोपः। इन्धे । इन्धाते । इन्धते । इन्त्से । इन्धाञ्चक्रे । इन्धेश्छन्दोविषये त्वाम् । ईधे । अनिदितामिति नलोपः । ईधाते । ईधिरे । इन्धिता । इन्धिष्यते । इन्धिषतै । इन्धिषातै । इन्धाम् । इन्धाताम् । इन्धै । ऐन्ध । ऐन्धाः । इन्धीत । इन्धिषीष्ट । ऐन्धिष्ट । ऐन्धिष्यत । खिद, दैन्ये । खिन्ते । खेत्ता । खिन्ताम् । अखिन्त । खिन्दीत । खित्सीष्ट । अखित्त । विद, विचारणे । विन्ते । विविदे । वेत्ता । वेत्स्यते । वेत्सतै । वेत्सातै । विन्ताम् । अविन्त । विन्दीत । वित्सीष्ट । अवित्त । अवेत्स्यत । खिदिविदी अनुदात्तावात्मनेपदिनौ॥ अथ परस्मैपदिनो द्वादश । शिष्लृ, विशेषणे । शिनष्टि । शिंष्टः। शिंषन्ति । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । शेक्षति । शेक्षाति । शिनष्टु । शिण्ढि । शिण्ड्ढि । शिनषाणि । अशिनट् । शिंष्यात् । शिष्यात् । लृदित्वादङ् । अशिषत् । अशेक्ष्यत् । पिष्लृ, सञ्चूर्णने । पिनष्टि । पिपेष । शिषिवत् । भञ्जो, आमर्दने । भनक्ति । बभञ्ज । बभञ्जिथ । बभङ्क्थ ।

( १ ) अनिदितामिति न लोप इतु न । नलोपस्य असिद्धवदत्रेत्य सिद्धत्वात्स्थानिवत्वाद्वा ।

( २ ) हेधिः जश्त्वम् । ष्टुत्वम् । झरो झरीति वा ड लोपः अनुस्वार पर सवर्णौ

भङ्क्ता । भङ्क्ष्यति । अभाङ्क्षीत् । अभाङ्क्ताम् । भुज, पालनाभ्यवहारयोः । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् । अभौक्षीत् । अभोक्ष्यत् । अनुदात्ता उदात्तेतश्चत्वारः । तृह, हिंसि, हिंसायाम् ।

तृणह इम् ॥ ७ । ३ । ९२ ॥

तृणह इत्यस्येम् हलादौ पिति सार्वधातुके । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । तर्हिष्यति । तर्हिषति । तर्हिषाति । तृणेढु । अतृणेट् । तृंह्यात् । तृह्यात् । अतर्हीत् । हिनस्ति । हिंस्तः । हिंसन्ति । जिहिंस । हिंसिता । उन्दी, क्लेदने । उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । उन्दिता । उनत्तु । उन्धि । औनत् । औनः । औनत् । औनदम् । उन्द्यात् । उद्यात् । औन्दीत् । अञ्जू, व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ । आनङ्क्थ । अङ्क्ता । अञ्जिता । अङ्ग्धि । अनजानि । आनक् । अञ्ज्यात् । अज्यात् ।

अञ्जेः सिचि ॥ ७ । २ । ७१ ॥

अञ्जेः सिचो नित्यमिट् । आञ्जीत् । आञ्जिष्टाम् । तञ्चू, संकोचने । तनक्ति । ततञ्चिथ । ततङ्क्थ । ताञ्चिता । तङ्क्ता । तनक्तु । अतनक् । अतञ्चीत् । अताङ्क्षीत् । ओविजी, भयचलनयोः । विनक्ति । विङ्क्तः । विवेज । विविजिथ । विजिता । विजिष्यति । विजिषति । विजिषाति । विनक्तु । अविनक् । अविजीत् । वृजी, वर्जने । वृणक्ति । वर्जिता । पृची, सम्पर्के । पृणक्ति । पपर्च । पपर्चिथ । पर्चिता । पर्चिष्यति । पर्चिषति । पर्चिषाति । पृणक्तु । अपृणक् । पृञ्च्यात् । पृच्यात् । अपर्चीत् । अपर्चिष्यत् । वृत् ।

इति श्नम्विकरणो रुधादिगणः समाप्तः ।

# अथ तनादिगणः ।

अथ सप्त स्वरितेतः । तनु, विस्तारे ।

**तनादिकृञ्भ्य उः ॥ ३ । १ । ७९ ॥**

तनादिभ्यः करोतेश्च उः कर्त्रर्थे सार्वधातुके । तनोति । तनुते । लोपश्चास्येति पक्षे लोपः । तनुवः । तन्वः । तनुमः । तन्मः । ततान । तेने । तनिता । तनिष्यते । तानिषति । तानिषाति । तनोतु । तनु । तनवानि । तनुताम् । अतनोत् । अतनुत । तनुयात् । तन्वीत । तन्यात् । तनिषीष्ट । अतानीत् । अतनीत् ।

**तनादिभ्यस्तथासोः ॥ २ । ४ । ७९ ॥**

तनादिभ्यः परस्य सिचो वा लुक् तथासोः परतः । थासासाहचर्यादात्मनेपदस्य तशब्दस्येह ग्रहणादतनिष्ट यूयमित्यत्र न लुक् । अतत । अतनिष्ट । अतथाः । अतनिष्ठाः । अतनिषि । अतनिष्यत् । अतनिष्यत । षणु, दाने । सनोति । सनुते । ये विभाषेति आत्वस्वा । सायात् । सन्यात् । जनसनखनां सञ्झलोः । असात । असनिष्ट । असाथाः । असनिष्ठाः । क्षणु, हिंसायाम् । क्षणोति । क्षणुते । चक्षाण । चक्षणे । ह्म्यन्तेति न वृद्धिः । अक्षणीत् । अक्षत । अक्षणिष्ट । अक्षथाः । अक्षणिष्ठाः । उप्रत्ययनिमित्तो लघूपधगुणः । क्षेणोति । क्षेणुते । चिक्षिणे । क्षेणितासि । क्षेणितासे । क्षेणिषति । क्षेणिषाति । अक्षेणीत् । अक्षित । अक्षेणिष्ट । अक्षिथाः ।

अक्षेषिष्ठाः । क्षिणु, गतौ । क्षिणोति । क्षिणुतः । क्षिणुवन्ति । आनर्ण । आनृणतुः । आनृणे । अर्णितासि । आर्णीत् । आर्त । आर्णिष्ट । आर्थाः । आर्णिष्ठाः । तृणु, अदने । तर्णोति । तर्णुते । अतृत । अतर्णिष्ट । घृणु, दीप्तौ । घर्णोति । घर्णुते । जघर्ण । जघृणे । तनादय उदात्ताः स्वरितेत उभयतो भाषाः ॥ वनु, याचने । वनुते । ववने । वनिता । वनिष्यते । वानिषते । वानिषातै । वनुताम् । वनवै । अवनुत । वन्वीत । वनिषीष्ट । अवत । अवनिष्ट । अवथाः । अवनिष्ठाः । अवनिष्यत । मनु, अवबोधने । मनुते । मेने । अमत । अमनिष्ट । उदात्तावनुदात्तेतावात्मनेपदिनौ । डुकृञ्, करणे । अनुदात्त उभयतोभाषः । करोति । तस्मिन् परेऽपि उप्रत्ययनिमित्तो गुणः ।

अत उत्सार्वधातुके ॥ ६ । ४ । ११० ॥

उ प्रत्ययान्तस्य करोतेरत उत्सार्वधातुके क्ङिति । कुरुतः । हलिचेति दीर्घो न भकुर्छुरामिति निषिध्यते । कुर्वन्ति । करोषि । कुरुथः । कुरुथ । करोमि ।

नित्यं करोतेः ॥ ६ । ४ । १०८ ॥

करोतेः परस्य प्रत्ययोतो नित्यं लोपो म्वोः परयोः । कुर्वः । कुर्मः । कुरुते । कुर्वाते । चकार । चक्रतुः । चकर्थ । चक्रुव । चकृम । चक्रे । चकृषे । कर्ता । 'ऋद्धनोःस्य' इतीट् । करिष्यति । करिष्यते । कार्षति । कार्षाति । कार्षतै । कार्षातै । करोतु । कुरुताम् । अकरोत् । अकुरुत ।

ये च ॥ ६ । ४ । १०९ ॥

करोतेः परस्य प्रत्ययोतो नित्यं लोपो यादौ प्रत्यये । कुर्यात् ।

क्रियात् । कृषीष्ट । अकार्षीत् । अकार्ष्टाम् । अकृत । अकृथाः । अकरिष्यत् । अकरिष्यत ।

सुट् कात्पूर्वः ॥ ६ । १ । १३५ ॥

अधिकारोऽयम् । पारस्करप्रभृतीनि चेति यावत् ।

सम्परिभ्यां करोतौ भूषणे ॥ ६ । १ । १३७ ॥

समवाये च ॥ ६ । १ । १३८ ॥

सम्परिभ्यां करोतेः कात्पूर्वस्सुट् भूषणे समवाये चार्थे । समवायः समूहः । संस्करोति । अलङ्करोतीत्यर्थः । संस्कुर्वन्ति । समवयन्तीत्यर्थः । सम्पूर्वस्य क्वचिदभूषणेऽपि सुट् । संस्कृतं भक्षा इति ज्ञापकात् । परिनिविभ्य इति षः । परिष्करोति । सिवादीनां वाऽड्व्यवायेऽपीति विकल्पः । पर्यष्करोत् । पर्यस्करोदित्यादि । परिचस्कारेत्यादौ, स्थादिष्वभ्यासेनेति न षत्वम् । तत्र प्राक्सितादित्यनुवृत्तेः ।

उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ॥ ६ । १ । १३९ ।

प्रतियत्नादिषूपात्करोतेः कात्पूर्वः सुट् । एधोदकस्योपस्कुरुते । उपस्कृतं भुङ्क्ते । उपस्कृतं जल्पति । उपस्कृता शाला । उपस्कृता ब्राह्मणाः ।

---

(१) तनादिभ्यस्तथासोरिति विकल्पितो लुङ् न । तनादित्वादेवास्योप्रत्यये सिद्धे पृथग्विधानादन्यत्तनादिकार्य्यं न भवतीति ज्ञापनात् । यद्वास्तु विकल्पस्तथापि ह्रस्वादङ्गादिति लुगभावे लोपो भविष्यति । न च लोपपक्षे प्रत्ययलक्षणप्रवृत्त्या गुणः स्यादिति वाच्यम् । उश्चेति सिचः कित्त्वेन तन्निषेधात् ।

**मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ॥२।४।८०॥**

घसादिभ्यः परस्यलेर्लुक् मन्त्रविषये । अक्षन्नमीमदन्त पितरः । अग्मन् । अघसन् । मा ह्वर्मित्रस्य । अह्वार्षीत् । प्रणङ् मर्त्यस्य । अनशत् । सुरुचो वेन आवः । अवारीत् । मा न आधक् । अधाक्षीत् । आप्रा द्यावापृथिवी । अप्रासीः । परावर्ग्भारभृद्यथा । अवर्जीत् । अक्रन् कर्म्म कर्मकृतः । अकार्षुः । त्वेरयिं जागृवांसोऽनुग्मन् । अगमन् । अज्ञत वा स्यदन्ताः । अजनिष्टेति लोके ।

**अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयां क्रियाद्विदामक्रन्निति छन्दसि ॥ ३ । १ । ४२ ॥**

एते छन्दसि वा निपात्यन्ते । अभ्युत्सादयामकः । अभ्युदसीषददिति लोके । प्रजनयामकः । प्राजीजनत् । चिकयामकः । अचैषीत् । रमयामकः । अरीरमत् । पावयांक्रियात् । पाव्यात् । विदामक्रन् । अवेदिषुरिति लोके । लुक् ॥

**॥ इति तनादिगणः समाप्तः ॥**

# अथ क्र्यादिगणः ॥

डुक्रीञ्, द्रव्यविनिमये ।

क्र्यादिभ्यः श्ना ॥ ३ । १ । ८१ ॥

क्र्यादिभ्यः श्ना स्यात्कर्त्रर्थे सार्वधातुके । शपोऽपवादः । क्रीणाति । ईहल्यघोरितीत्वम् । क्रीणीतः । श्नाभ्यस्तयोः परस्य ङित्त्वादन्तरङ्गत्वादीत्वात्पूर्वमन्तादेशाच्छ्नाभ्यस्तयोरातोलोपः । क्रीणन्ति । क्रीणीते । क्रीणाते । क्रीणते । चिक्राय । चिक्रियतुः । चिक्रयिथ । चिक्रेथ । चिक्रियिव । क्रेता । क्रेष्यति । क्रेष्यते । क्रैषति । क्रैषाति । क्रैषते । क्रैषातै । क्रीणातु । क्रीणीहि । क्रीणानि । क्रीणीताम् । अक्रीणीत । क्रीणीयात् । क्रीणीत । क्रीयात् । क्रेषीष्ट । अक्रैषीत् । अक्रेष्ट । अक्रेष्यत् । अक्रेष्यत । प्रीञ्, तर्पणे कान्तौ च । कान्तिः कामना । प्रीणाति । प्रीणीते । श्रीञ्, पाके, मीञ्, हिंसायाम् । 'हिनुमीना' । प्रमीणाति । प्रमीणीतः । 'मीनाति मिनो' तीत्यन्विषये आत्वम् । ममौ । मिम्यतुः । ममिथ । ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त । अमासाताम् । षिञ्, बन्धने । सिनाति । सिनीते । सिषाय । सिष्ये । सेता । स्कुञ्, आप्रवणे ।

स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥ ३ । १ । ८२ ॥

स्तम्भ्वादिभ्यः श्नुश्चात् श्ना कर्त्रर्थे सार्वधातुके । स्कुनोति । स्कुनुते । स्कुनाति । स्कुनीते । चुस्काव । चुस्कुवे । स्कोता । अस्कौषीत् ।

अस्कोष्ट । स्तम्भ्वादयश्चत्वारः सौत्राः । सर्वे रोधनार्था इत्येके । अन्ये तु । प्रथमतृतीयौ स्तम्भार्थौ द्वितीयो निष्कोषणार्थश्च-तुर्थो धारणार्थ इत्याहुः। सर्वे परस्मैपदिनः । अनिदितामिति नलोपः । विष्टभ्नोति । विष्टभ्नाति । अवष्टभ्नोति । अवष्टभ्नाति । अवतष्टम्भ । जृस्तम्भिवत्यङ् वा । व्यष्टभत् -व्यष्टम्भीत् । स्तुभ्नोति ।

वेः स्कभ्नातेर्नित्यम् ॥ ८ । ३ । ७७ ॥

वेः परस्य स्कभ्नातेः सस्य नित्यं मूर्द्धन्यादेशः । विष्कभ्नोति । विष्कभ्नाति । स्कुभ्नोति । स्कुभ्नाति ।

हलः श्नः शानज्झौ ॥ ३ । १ । ८३ ॥

हलन्ताद्धातोः परस्य श्नः प्रत्ययस्य शानच्‌ स्यात् हौ परतः । स्तभान । स्तुभान । स्कभान । स्कुभान । षत्वे । स्तम्भुहीत्यादि ।

छन्दसि शायजपि ॥ ३ । १ । ८४ ॥

छन्दसिविषये श्नः स्थाने शायजपिशब्दात् शानच् । गृभाय । स्तभाय । स्कभाय । स्तभान । बधान देव सवितः । युञ्, बन्धने । युनाति । युनीते । युयाव । युयुवे । योता । क्र्यादयोऽनुदात्ताः सप्त ॥ क्नूञ्, शब्दे । क्नूनाति । क्नूनीते । क्नविता द्रूञ्, हिंसायाम् । द्रूणाति । द्रूणीते । दुद्राव । दुद्रुवे । पूञ्, पवने । लीश्लेषणे पर्यन्ता ।

प्वादीनां ह्रस्वः ॥ ७ । ३ । ८० ॥

शिति परे । पुनाति । पुनीते । पुपाव । पुपुवे । पविता ।

(१) अतोऽत्र रित्यारम्भसामर्थ्यात्संनिपातपरिभाषया अप्रवृत्ते हैं लुक् । अत एव अङ्गीत्यत्र हिलोपवारणायेयं परिभाषा नोपन्यस्तेत्याहुः ।

क्नूञ्= उद्‌दन्ते मैति ... शी ... नु ... शिव ऊ ... ष्ठः ... च ... जिन्ला ... निदिता ... स्मिल ... / इमेतु लेट ।

पविष्यति । लूञ्, छेदने । लुनाति । स्तॄञ्, आच्छादने । स्तृणाति । स्तृणीते । तस्तार । तस्तरतुः । स्तरिता । स्तरीता । अस्तृणात् । अस्तृणीत । स्तृणीयात् । स्तृणीत । स्तीर्यात् । लिङ्सिचोरिति वेट् । न लिङीति दीर्घनिषेधः । स्तरिषीष्ट । उश्चेति कित्वम् । स्तीर्षीष्ट । सिचि च परस्मैपदेष्विति न दीर्घः । अस्तारीत् । अस्तारिष्टाम् । अस्तरिष्ट । अस्तरीष्ट । अस्तीर्ष्ट । कॄञ्, हिंसायाम् । कृणाति । कृणीते । चकार । चकरे । वॄञ्, वरणे । वृणाति । ववार । ववरे । वरिता । वरीता । आशिषि, उदोष्ठ्यपूर्वस्य, हलि चेति दीर्घः । वूर्यात् । वरिषीष्ट । वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट । अवरीष्ट । अवूर्ष्ट । धूञ्, कम्पने । धुनाति । धुनीते । दुधविथ । दुधोथ । दुधुविव । धोता । धविता । स्तुसुधूञ्भ्य इतीट् । अधावीत् । अधविष्ट । अधोष्ट । इत्युदात्ता उभयतो भाषाः ॥ अथ बध्नात्यन्ताः परस्मैपदिनः । शॄ, हिंसायाम् । शृणाति । शशार । शॄदॄप्रां ह्रस्वो वेति ह्रस्वपक्षे यणादेशः । अन्यत्रा ऋच्छत्यॄताामिति गुणः । शश्रतुः । शशरतुः । अपितः लिटः कित्वेन असंयोगाल्लिट् कितीति प्राप्तस्येण्निषेधस्य क्रादिनियमेन बाधः । शशरिव । शश्रिव । शरिता । शरीता । शरिष्यति । शरीष्यति । शारीषाति । शारीषाति । शारिषति । शारिषाति । शृणातु । शृणीहि । अशृणात् । शृणीयात् । शीर्यात् । अशारीत् । अशरिष्यत् । अशरीष्यत् । पॄ, पालनपूरणयोः । पृणाति । पपार । पप्रतुः । पपरतुः । उदोष्ठ्यपूर्वस्येत्युत्वम् । पूर्यात् । वॄ, वरणे । भरण इत्येके । वृणाति । वूर्यात् । भॄ, भर्त्सने । भरण इत्यन्ये । मॄ, हिंसायाम् । मृणाति । ममार । दॄ, विदारणे । दृणाति । दद्रतुः । ददरतुः । जॄ, वयोहानौ । झॄ, इत्येके । धॄ, इत्यन्ये । नॄ, नये । कॄ, हिंसायाम् । ॠ, गतौ । ऋणाति ।

अराञ्चकार । अरिता । अरीता । आर्णात । आर्णीताम् । ईर्यात् । आरीत् । आरिष्टाम् । गॄ, शब्दे । ज्या, वयो हानौ । अहि ज्यादिनां सम्प्रसारणे पूर्वरूपत्वे—

हलः ॥ ६ । ४ । २॥

अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्ताङ्गस्य दीर्घः । इति दीर्घे । प्वादित्वाद्ध्रस्वः । जिनाति । जिज्यौ । ज्याता । ज्यास्यति । ज्यासति । ज्यासाति । जिनातु । अजिनात् । जिनीयात् । जीयात् । अज्यासीत् । अज्यास्यत् । री, गतिरेषणयोः । रेषणं वृकशब्दः । रिणाति । ली, श्लेषणे । लिनाति । विभाषा लीयतेरित्येज्विषये आत्वंवा । ललौ । लिलाय । लाता । लेता । व्ली, वरणे । प्ली, गतौ । वृत् ॥ ल्वादयो वृत्ताः ॥ व्री, वरणे । भ्री, भये । भरण इत्येके । क्षीष्, हिंसायाम् । क्षीणाति । षित्वात् षिद्भिदादिभ्यश्चेत्यङ् । क्षिया । ज्ञा, अवबोधने । ज्ञाजनोर्जेति शित्प्रत्यये जादेशः । दीर्घनिर्देशसामर्थ्यात्प्वादीनामिति ह्रस्वो न । जानाति । जज्ञौ । ज्ञाता । ज्ञास्यति । ज्ञासति । ज्ञासाति । जानातु । जानीहि । अजानात् । जानीयात् । ज्ञेयात् । ज्ञायात् । अज्ञासीत् । अज्ञास्यत् । बन्ध, बन्धने । बध्नाति । बबन्धिथ । बबन्ध । बन्धा । बन्धारौ । भन्त्स्यति । भन्त्सति । भन्त्साति । बध्नातु । हलःश्नः शानज्झाविति शानजादेशे हेर्लुक् । बधान । बध्नाव । अबध्नात् । बध्नीयात् । बध्यात् । अभान्त्सीत् । पूर्वत्रासिद्धमिति भष्भावात्पूर्वं झलोझलीति सिचोलोपः ।

( १ ) अङ्गस्येत्यावर्तते, तत्रैकं हलोविशेषण मवयवसम्बन्धे षष्ठी । द्वितीयं च सम्प्रसारणस्यविशेष्यं तदन्तविधिश्च तदेतदाह-अङ्गावयवादिति ।

कृते तस्मिन्प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य षत्वभावो न। प्रत्यय-लक्षणं प्रतिसिङ्क्लोपस्या सिद्धत्वात् ।अधान्धाम् । अधान्स्तुः । ज्यादयोऽनुदात्ताः परस्मैभाषाः । वृङ् सम्भक्तौ । उदात्त आत्मनेपदी । वृणीते । वव्रे । ववृषे । ववृढ्वे । वरीता । वरिता । वृणीताम् । अवृणीत । वरिषीष्ट । वृषीष्ट । अवरीष्ट । अवरिष्ट अवृत । अवरीष्यत । अवरिष्यत । श्रन्थ,विमोचनप्रतिहर्षयोः । इतः परस्मैपदिनः । श्रथ्नाति । श्रन्थिग्रन्थीत्यादिना लिटः कित्त्वादनिदितामिति न-लोपः । एत्वाभ्यासलोपौ । श्रेथतुः । श्रेथुः । शश्रन्थिथ । श्रेथथुः । श्रेथ । शश्रन्थ । श्रेथिव । श्रेथिम । कित्त्वविकल्पमिच्छतां मते तु शश्रन्थतुरित्याद्यपि । श्रन्थिता । श्रन्थिष्यति । श्रन्थिषति । श्रन्थिषाति । श्रथ्नातु । श्रथान । श्रथाय । अश्रथ्नात् । श्रथ्नीयात् । श्रथ्यात् । अश्रन्थीत् । अश्रन्थिष्यत् । मन्थ,विलोडने । मथ्नाति । मथान । मथाय । ग्रन्थ,मन्थ,सन्दर्भे । ग्रथ्नाति । इत्यादि सर्वं श्रन्थिवत् । अन्थेः पुनः पाठोऽर्थभेदात् । रूपाणिपूर्ववत् । कुन्थ,संश्लेषणे । कुन्थाति । कुथान । कुथेति काश्चित् । मृद,क्षोदे । मृद्नाति । मृदान । मृड,च । अयं सुखेऽपि । मृना मृरिति मृत्वम् । मृड्णाति । मृडान । गुध,रोषे । गुध्नाति । गुधान । कुष,निष्कर्षे । कुष्णाति । चुकोष । कोषिता ।

## निरः कुषः ॥ ७ । २ । ४६ ॥

निरिति पूर्वात्कुषेः परस्यवलाद्यार्धधातुकस्येड् वा । निष्कोषिता । निष्कोष्टा । निरकोषीत् । निरकुक्षत् । क्षुभ,सञ्चलने ।

## क्षुभ्नादिषु च ॥ ८ । ४ । ३९ ॥

णत्वं नस्य णो न । क्षुभ्नाति । क्षुभ्नीतः । क्षोभिता । क्षुभाण ।

क्षुभाय । णभ,तुभ,हिंसायाम् । नभ्नाति । तुभ्नाति । इत्यादि-पूर्ववत् । नभ्यति । तुभ्यतीति दिवादौ । नभते तोभत इति शपि । क्लिशू,विबाधने । क्लिश्नाति । क्लेशिता । क्लेष्टा । अक्लेशीत् । अक्लिचत् । अश,भोजने । अश्नाति । आश । आशतुः । अशान । उध्रस, उञ्छे । उकार इत् । ध्रस्नाति । दध्रास । ध्रसिता । ध्रसान, उकारो-धात्ववयव इत्येके । तन्मते,उध्रस्नातीत्यादि । उध्रसाञ्चकार । औ-ध्रस्नादित्याद्युदाहार्य्यम् । अन्यथा स्वादिवद्ध्रसु इति ब्रूयादि-त्याशयः । इष,आभीक्ष्ण्ये । पौनःपुन्यं भृशार्थो वाऽऽभीक्ष्ण्यं तद्विषयायां क्रियायामित्यर्थः, इष्णाति । इयेष । ईषतुः । एषिता । एष्टा । एषिष्यति । इषाण । ऐष्णात् । इष्णीयात् । इष्यात् । ऐ-षीत् । विष,विप्रयोगे । विष्णाति । वेष्टा । प्रुष,प्लुष, स्नेहनसेवनपू-रणेषु । प्रुष्णाति । प्लुष्णाति । पुष,पुष्टौ । पोषिता । पुषाण । मुष, स्तेये । मुष्णाति । मोषिता । मुषाण । खच, भूतप्रादुर्भावे । भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिरिति माधवः । खच्नाति । श्चुत्वेन ञकारः । वान्तोऽयमित्येके ।

छ्वोः शूडनुनासिके च ॥ ६ । ४ । १९ ॥

सतुक्कस्य छस्य वस्य च क्रमात् शूठावनुनासिके, क्वौ, झला-दौ क्ङिति च । खौनाति । खौनीतः । चखाव । चखवतुः । खविता । खौनीहि । परत्वादूठि हलन्तत्वाभावान्न शानच् । हेठ,च । हेठ्-णाति । हेठतीति तु, हेठ, विबाधायामित्यस्य शपि । अन्थादय उदात्ता उदात्तेतः पञ्चविंशतिः । ग्रह,उपादाने । उदात्तः स्वरितेत् ।

(१) तीषसहेत्यत्र सहिना साहचर्य्यादकारविकरणस्य तौदादिकस्यैव इषे ग्र-हणं, नतु इष्यती ष्णात्योरित्याहुः । वस्तुतस्तु इष्णातेरपीड्विकल्प उचितः । तथा च वार्तिकम्" इषेस्तकारे श्यन् प्रत्ययात्प्रतिषेध इति श्यन्प्रत्ययवत इषेस्तकारे परत इड्-विकल्पप्रतिषेध इतिवार्तिकार्थः । तथाच दैवादिकाद् विकल्पोनेति फलितम् ।

ग्रहिज्येति सम्प्रसारणम् । गृह्णाति । गृह्णीते । जग्राह । जगृहतुः । जगृहुः । जग्रहिथ । जगृहे ।

ग्रहोऽलिटि दीर्घः ॥ ७ । २ । ३७ ॥

ग्रहेः परस्येटो दीर्घो न तु लिटि । ग्रहीता । ग्रहीष्यति । ग्रहीष्यते । ग्राहीषति । ग्राहीषाति । गृह्णातु । गृहाण । गृह्णीताम् । अगृह्णात् । अगृह्णीत । गृह्णीयात् । गृह्णीत । आशिषि । गृह्यात् । ग्रहीषीष्ट । अग्रहीत् । ह्मयन्तेति न वृद्धिः । अग्रहीष्ट । अग्रहीषाताम् । अग्रहीषत । अग्रहीष्यत् । अग्रहीष्यत । वृत् ॥

इति श्नाविकरणःक्र्यादिगणः समाप्तः ।



# अथ चुरादिगणः

चुर, स्तेये । अकार उच्चारणार्थः ।

सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्ण-
चुरादिभ्यो णिच् ॥ ३ । १ । २५ ॥

सत्यापादिचूर्णान्तेभ्यो धात्वर्थे णिच्चुरादिभ्यश्च स्वार्थे । पुगन्तेति गुणः । सनाद्यन्तेति धातुत्वम् । तिप् शबादि । गुणायादेशौ । चोरयति । चोरयतः । चोरयन्ति ।

णिचश्च ॥ १ । ३ । ७४ ॥

णिजन्ताद्धातो रात्मनेपदं कर्तृगामिनि क्रियाफले । चोरयते । चोरयाञ्चकार । चोरयाञ्चक्रे । चोरयिता । चोरयिष्यति । चोरयिष्यते । चोरयिषति । चोरयिषाति । चोरयतु । चोरयताम् । चोर्यात् । चोरयिषीष्ट । लुङि । णिश्रीति चङ् । "णौ चङी" ति ह्रस्वः । द्वित्वम् । हलादिश्शेषः । दीर्घो लघोरित्यभ्यासदीर्घः । अचूचुरत् । अचूचुरत । अचोरयिष्यत् । अचोरयिष्यत । चितिँ,

(१)–इदित्वान्नुम् । चिन्तेति पठितव्ये इदित्पाठान्नलोपाभावार्थादस्य णिच् पाक्षिकः । नित्ये हि णिचि तस्य स्थानिवद्भावाद्व्यवधानान्न क्वापि क्ङित्परत्वमिति न- लोपाप्रसङ्गः । तेन चिन्तति । चिचिन्त । चिन्तितेत्याद्यपि भवति । एवमन्यत्रापीदित्वं णिज्विकल्पार्थं द्रष्टव्यम् । परमत्रार्थे भाष्यानुग्रहः । चेततीति शपि संज्ञाने ।

स्मृत्याम् । चिन्तयति । अचिचिन्तत् । यत्रि, संकोचे । यन्त्रयति । अययन्त्रत् । स्फुडि, परिहासे । स्फुण्डयति । अपुस्फुण्डत् । इदित्करणात् । स्फुण्डति । स्फुटि, इत्येके । स्फुण्टयति । लक्ष, दर्शनाङ्कनयोः । लक्षयति । अललक्षत् । कुद्रि, अनृतभाषणे । कुन्द्रयति । अचुकुन्द्रत् । लड, उपसेवायाम् । स्नेहपूर्वकसेवायामित्यर्थः । लाडयति । अलीलडत् । मिदि, स्नेहने । मिन्दयति । मिन्द्यात् । अमिमिन्दत् । ओलडि, उत्क्षेपणे । ओलण्डयति । केचिदोदितं पठन्ति तेषां मते-लण्डयति । अपरे तूकारादिं पठन्ति । उलण्डयति-जल, अपवारणे । लज, इत्येके । पीड, अवगाहने । पीडयति ।

भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥७।४।३॥

भ्राजादीनामुपधाया ह्रस्वो वा चङ्परे णौ । अपीपिडत् । अपिपीडत् । नट, अवस्कन्दने । अवस्कन्दनं नाट्यम् । नटयति । अनीनटत् । अथ, प्रयत्ने । प्रस्थान इत्येके । आथयति । बध, संयमने । बाधयति । अबीबधत् । पॄ, पूरणे । पारयति । पारयते । पारयाञ्चकार । पारयिता । अपीपरत् । ऊर्ज, बलप्राणनयोः । पक्ष, परिग्रहे । वर्ण, चूर्ण, प्रेरणे । वर्ण, वर्णन इत्येके । प्रथ, प्रख्याने । प्राथयति । नान्ये मितोऽहेताविति सम्भवद्धेतुमण्णिचां चुरादिणिचि मित्त्वाभावात् "प्रथ प्रख्यान" इति घटादिकं मित्त्व मस्य न ।

अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ॥ ७ । ४ । ९५ ॥

स्मरादीनामभ्यासस्याकारोऽन्तादेशश्चङ्परे णौ । इत्वाप-

( १ )–यंत्रे ति पठितुं युक्तम् ।

( २ )–दीर्घोच्चारणसामर्थ्यात् पक्षे णिज् न । तेन परतीत्यादिसिद्धिः । केचित्तु दीर्घपाठस्य सन्दिग्धत्वेन नेदं णिज्विकल्पे ज्ञापकमित्याहुः ।

वाद.। अपप्रथत् पृथ, प्रक्षेपे । पर्थयति । पर्थयते । पर्थयाञ्चकार ।

उर्ऋत् ॥ ७ । ४ । ७ ॥

उपधाया ऋवर्णस्य ऋद्वा चङ्परे णौ। इरारारामपवादः । अपीपृथत् । अपपर्थत् । अपीपृथत । अपपर्थत । पथ, इत्येके । पाथयति । षम्ब, सम्बन्धने । सम्बयति । अससम्बत् । शम्ब, च । अशशम्बत् । साम्ब, इत्येके । भक्ष, अदने । भक्षयति । कुट्ट, छेदनभर्त्सनयोः । पूरण इत्येके । कुट्टयति । अचुकुट्टत् । पुट्ट, चुट्ट, अल्पीभावे । पुट्टयति । चुट्टयति । अट्ट, षुट्ट, अनादरे । अट्टति । ष्टुत्वस्यासिद्धत्वान्नन्द्राइति निषेधः । आट्टिटत् । लुण्ठ, स्तेये । लुण्ठयति । शठ, श्वठ, असंस्कारगत्योः । श्वठि, इत्येके । शाठयति । श्वाठयति । श्वण्ठयति । तुजि, पिजि, हिंसाबलादाननिकेतनेषु । तुञ्जयति । अतुतुञ्जत् । पिञ्जयति । अपिपिञ्जत् । इदित्करणात्तुञ्जति, पिञ्जतीत्यपि । तुज, पिज, इत्येके । लजि, लुजि, इत्यपरे । पिस, गतौ । पेसयति । अपीपिसत् । षान्त्व, सामप्रयोगे । सान्त्वयति। अससान्त्वत् । श्वल्क, वल्क, परिभाषणे । श्वल्कयति । वल्कयति । अशश्वल्कत् । अववल्कत् । ष्णिह, स्नेहने । स्नेहयति । असिष्णिहत् । स्फिट, इत्येके । स्फेटयति । स्मिट, अनादरे । स्मेटयति । असिस्मिटत् । स्मिङ्, इत्येके । श्लिष, । श्लेषणे । श्लेषयति । अशिश्लिषत् । पथि,

( १ )–अयं टोपधः । टोपधत्वे त्वाट्टिट्टदिति स्यादिति भावः ।

(२)तुजि हिंसायां, तुजि पालने चेतिभ्वादिपाठादेव हिंसायां तुञ्जतीति सिद्धाविदित्वेन णिजनित्यत्वं बलादाननिकेतनयोरपि तुञ्जतीति रूपसिद्धये ।

( ३ ) ङित्वस्यावयवेऽचरितार्थत्वाण्णिजन्तात्तङ् । स्माययते ।

गतौ । पन्थयति । अपपन्थत् । पन्थति । पिच्छ, कुट्टने । पिच्छयति । अपिपिच्छत् । छदि, सम्बरणे । छन्दयति । श्रण, दाने । प्रायेणायं विपूर्वः । विश्राणयति । व्यशिश्रणत् । तड, आघाते । ताडयति । अतीतडत् । खड, खडि, कडि, भेदने । खाडयति । अचीखडत् । खण्डयति । अचखण्डत् । कण्डयति । अचकण्डत् । कुडि, रक्षणे । गुडि, वेष्टने । रक्षणे इत्येके । कुठि, इत्यन्ये । गुठि, इत्यपरे । खुडि, खण्डने । वठि, विभाजने । वडि, इत्येके । मडि, भूषायां हर्षे च । मण्डयति । मण्डयते । मण्डयाञ्चकार । मण्डयिता । मण्डयिष्यति । मण्डयिषति । मण्डयिषाति । मण्डयतु । मण्डयताम् । अमण्डयत् । मण्डयेत । मण्डयात् । अममण्डत् । अमण्डयिष्यत् । अमण्डयिष्यत । भडि, कल्याणे । छर्द, वमने । पुस्त, बुस्त, आदरानादरयोः । चुद, संचोदने । नक्क, धक्क, नाशने । णोपदेशपर्युदासे नृतिनन्दीत्यादावुपादानात् । प्रनक्कयति । नक्कयिषतै । नक्कयिषातै । चक्क, चुक्क, व्यथने । चल, शौचकर्म्मणि । चालयति । तल, प्रतिष्ठायाम् । अतालयत । तुल, उन्माने । तोलयति । तोलयामास । अतूतुलत् । दुल, उत्क्षेपणे । दोलयति । दोलयामास । अदूदुलत् । पुल, महत्वे । चुल, समुच्छ्राये । मूल, रोहणे । मूलयति । कल, विल, क्षेपे । कालयति । वेलयति । बिल, भेदने । बेलयति । तिल, स्नेहने । तेलयति । चल, भृतौ । चालयति । पाल, रक्षणे । पालयति । अपीपलत् । लूष, हिंसायाम् । लूषयति । अलूलुषत् । शुल्ब, माने । शुल्बयति । अशुशुल्बत् । शूर्पेति केचित् । चुट, छेदने । चोटयति । मुट, संचूर्णने । मोटयति । पडि, पसि, नाशने । पण्डयति । व्रज, मार्ग-

---

( १ ) तुलयतीत्यादौ तुलाशब्दाण्णिच् ।

संस्कारगत्योः । व्राजयति । व्रजि, इत्येके । शुल्क, अतिस्पर्शने । शुल्कयति । चपि, गत्याम् । चम्पयति । अचचम्पत् । चपि, क्षान्त्याम् । चम्पयति । चम्पति । चाजि, कृच्छ्रजीवने । श्वर्त्त, गत्याम् ।[१] श्वभ्र, च । ज्ञप, मिच । अयं ज्ञाने ज्ञापने च ।

## मितां ह्रस्वः ॥ ६ । ४ । ९२ ॥

मितामुपधाया ह्रस्वो णौ । ज्ञपयति । यम, चपरिवेषणे । चान्मिदित्यपेक्ष्यते इह परिवेषणं-परिवेष्टनम् । यमयति । चह, परिकल्कने । चहयति । अचीचहत् । अचचहदिति वक्ष्यते । चप, इत्येके । चपयति । चपयते । अचीचपत् । रह, त्यागे । रहयति । अरीरहत् । कथादावयं पठिष्यते । तत्र अररहत् । बल, प्राणने । बलयति । चिञ् । चयने ।

## चिस्फुरोर्णौ ॥ ६ । १ । ५४ ॥

चिनोतेः स्फुरतेश्चैव आत्वं वा णौ ।

## अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ ॥ ७ । ३ । ३६ ॥

अर्त्यादीनां पुङ् णौ । चययति । चपयति । अणिचि-प्रणिचयति । प्रनिचयति । ञित्करणात्कर्त्रभिप्राये तङ्विध्यर्थोणिच् विकल्पेन । चयति । चयते । नान्ये मितोऽहेतौ, ज्ञपादिव्यतिरिक्ता हेतुमण्णौमितो न, तेन ज्ञपादिपञ्चव्यतिरिक्तानां चौरादिकानां शमादी-

( १ ) न तु भोजना नापि वेष्टना । तत्रहि घटादित्वात्सिद्धम् ।

( २ ) अयं कथादावपि पठिष्यते तस्य फलमग्लोपित्वमग्लोपित्वाच्च दीर्घसन्वद्भावो न ।

नात्र "जनीजॄष्क्नसुरञ्जोऽमन्ताश्च" इत्यादिना सामान्यलक्षणेन प्राप्तंमित्त्वं न। घट्ट,चलने। मुस्त,संघाते। खट्ट,सम्वरणे। षट्ट,स्फिट्ट,चुबि, हिंसायाम्। सट्टयति। स्फिट्टयति। चुम्बयति। पूल, संघाते। पुणे-त्यन्ये। पूर्णइत्यन्ये। पूलयति। पुंस,अभिवर्द्धने। पुंसयति। टकि, बन्धने। टङ्कयति। धूस, कान्तिकरणे। धूसयति। धूष, इत्येके। धूश,इत्यपरे। कीट,वर्णे। कीटयति। अचिकीटत्। चूर्ण, संकोचने। चूर्णयति। पूज,पूजायाम्। अपूपुजत्। अर्क, स्तवने। तपनइत्येके। अर्कयति। आर्चिकत्। शुठ,आलस्ये। अशूशुठत्। शुठि,शोषणे। शुण्ठयति। शुण्ठति। जुड,प्रेरणे। जोडयति। गज, मार्ज, शब्दार्थौ। गाजयति। गाजयते। घृ, संप्रस्रवणे। घारयति। पचि, विस्तारवचने। पञ्चयति। तिज, निशाने। तेजयति। कृत,संशब्दने।

## उपधायाश्च ॥ ७ । १ । १०१ ॥

धातो रुपधायाऋृत इत्। उपधायाश्चेति दीर्घः। कीर्तयति। कीर्तयाञ्चकार। अचीकृतत्। अचिकीर्तत्। वर्ध, छेदनपूर्णयोः। वर्धयति। कुबि,आच्छादने लुबि,तुबि,अदर्शने। अर्दन इत्येके। लुम्बयति। तुम्बयति। ह्लप,व्यक्तायां वाचि। ह्लापयति। क्लप, इत्येके। क्लापयति। चुटि,छेदने। चुण्टयति। अचुचुण्टत्। इल, प्रेरणे। एलयति। ऐलिलत्। म्रक्ष,म्लेच्छने। म्लेच्छनमपशब्दनम्। म्रक्षयति। भ्रूस,बर्ह,हिंसायाम्। भ्रूसयति। बर्हयति। गर्ज,गर्द,शब्दे। गर्ध,अभिकाङ्क्षायाम्। गर्जयति। गर्दयति। गर्धयति। गुर्द, पूर्व,निकेतने। गूर्दयति। पूर्वयति। अजुगूर्दत्। अपुपूर्वत्। जसि, रक्षणे। मोक्षण इत्येके। जंसयति।जंसति। अजजंसत्। ईड,स्तुतौ। ईडयति। ऐडिडत्। जसु,हिंसायाम्। जासयति। अजीजसत्। पिडि,संघाते। पिण्डयति। रुष,रोषे। रोषयति। रुठ,इत्येके। डिप

क्षेपे। अडीडिपत्। ष्टुप,समुच्छ्राये। स्तोपयति। अतुष्टुपत। सेटः परस्मैपदिनः एकशतमष्टपञ्चाशच्च। आकुस्मादात्मनेपादिनः। अकर्त्रभिप्रायेऽपि णिच्सन्नियोगेनैवेति च। चित,संचेतने। संचेतनं। संज्ञानम्। चेतयते। अचीचितत। दशि,दंशने। दंशयते। अददंशत्। आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनेति केचित्। [1] तेनेदित्करणसामर्थ्याण्णिजभावे दंशतीतिरूपि। दसि, दर्शनदंशनयोः। दंसयते। दंसति। दसेत्यप्येके। डप,डिप,संघाते। डापयते। डेपयते। डेपयतीति क्षेपे गतः। तन्त्रि,कुटुम्बधारणे। [2] तन्त्रयते। अततन्त्रत। मन्त्रि,गुप्तभाषणे। मन्त्रयते। अममन्त्रत। स्पश,ग्रहण संश्लेषणयोः। स्पाशयते। अपस्पशत। तर्ज,भर्त्स, तर्जने। तर्जयते। अततर्जत। भर्त्सयते। बस्त,गन्ध,अर्दने। बस्तयते। गन्धयते। विष्क,हिंसायाम्। हिष्क,इत्येके। निष्क, परिमाणे। निष्कयते। लल,ईप्सायाम्। लालयते। अलीललयत्। कूण,संकोचने। कूणयते। अचुकूणत। तूण,पूरणे। भ्रूण,आशाविशङ्कयोः। भ्रूणयते। शठ, श्लाघायाम्। शाठयते। यक्ष,पूजायाम्। यक्षयते। स्यम, वितर्के। स्यामयते। गूर,उद्यमने। गूरयते। शम,लक्ष,आलोचने। शामयते। नान्ये मितोऽहेताविति न मित्वम्। लक्षयते। कुत्स,अवक्षेपणे। कुत्सयते। अचुकुत्सत। त्रुट,छेदने। कुट,इत्येके। गल,स्रवणे। गालयते। अजीगलत। अगालयिष्यत। भल,आभण्डने। भालयते। कूट,आप्रदाने। अवसादनइत्येके। कूटयते। अचुकूटत। कुट्ट,प्रतापने। कुट्टयते। अचुकुट्टत। वञ्चु,प्रलम्भने। वञ्चयते। अववञ्चत।

(१) इद्दंशत्वञ्जेति नलोपो न। तत्रहि सञ्जिसाहचर्य्याद्भ्वादेरेव ग्रहणात्।
(२) केषांचिन्मते कुटुम्बेति पृथग्धातुस्तन्मते कुटुम्बयते।

वृष,शक्तिबन्धने ? शक्ति बन्धनं प्रजननसामर्थ्यंशक्तिबन्धश्च । वर्षयते। अवीवृषत । मद,तृप्तियोगे । मादयते । अमीमदत । दिवु,परिकूजने । देवयते । अदीदिवत । गृ,विज्ञाने । गारयते । अजीगरत । विद, चेतनाख्याननिवासेषु । वेदयते । मान, स्तम्भे । मानयते । यु,जुगुप्सायाम् । यावयते । अयीयवत । कुस्म,नाम्नो वा।कस्मेति कुत्सितस्मयने । वर्तते । कुस्मयते । अचुकुस्मत । चेतादयो द्विचत्वारिंशत्समाप्ताः ॥ चर्च, अध्ययने । चर्चयति । अचचर्चत् । बुक्क,भाषणे भषणे इति क्वचित्पाठः । बुक्कयति । शब्द,उपसर्गादाविष्कारे च । चाद्भाषणे । उपसर्गपूर्वाच्छब्द इत्यस्मादाविष्कारे भाषणे च णिच् । प्रतिशब्दयति । कण,निमीलने । काणयति । काणयते। (काण्यादीनां वा) णौचङीति ह्रस्व विकल्पः । अचीकणत् । अचकाणत् । जभि,नाशने । जम्भति । अजजम्भत् । षूद, क्षरणे । सूदयति । असूषुदत् । जसु,ताडने । जासयति । जसति । पश, बन्धने । पाशयति ।अम, रोगे ।आमयति । नान्ये मितोऽहेताविति मित्त्वनिषेधः ।आमिमत्।आमिमत। चट, स्फुट, भेदने । चाटयते स्फोटयते। घट, संघाते। घाटयति। घाटयते। अजीघटत्। (हन्त्यर्थाश्च) ग० ॥ नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्ते। हिंसयति दिवु, मर्दने । उदित्त्वाद् देवतीत्यपि । अर्ज, प्रतियत्ने ।अर्थान्तरेऽपि

(१) अथवा कुस्मेति प्रातिपदिकं तस्माद्धात्वर्थे णिच् ।

(२) यद्यपि शब्दशब्दात्तत्करोतीति णिचि शब्दयति प्रतिशब्दयतीत्यादि सिद्धं, तथापि शब्दवैरेति क्यङा बाधोभावाय प्रतिशब्दयतीत्यस्य प्रतिश्रुतमाविष्करोतीतिस्वामी । पुनश्चानुपसर्गाच्चे ति पठित्वा आविष्कारइत्येव, शब्दयतीत्याह स्वामी ।

(३) अतएव ज्ञापकात् "निवृत्तप्रेरणाद्धातोः प्राकृतेऽर्थे णिजुच्यते," इत्यसार्वत्रिकम्।

द्रव्यमर्जयति । घुषिर्, विशब्दने । घोषयति । अजूघुषत् । घुषिरविशब्दन इति सूत्रेऽविशब्दन इति निषेधाल्लिङ्गादनित्योऽस्य णिच् । घोषति । इरित्वादङ् । वा । अघुषत् । अघोषीत् । आङः क्रन्द, सातत्ये । आङः परः क्रन्दः सातत्ये णिचमुत्पादयति । आक्रन्दयति । आचक्रन्दत । अन्ये तु आङ् पूर्वो घुषिः क्रन्दसातत्ये चुरादिः । आघोषयतीत्याहुः । लस, शिल्पयोगे । तसि, भूष, अलङ्करणे । अवतंसयति । भूषयति । मोच, असने । मोचयति । अर्ह, पूजायाम् । अर्हयति । ज्ञा, नियोगे । नियोगः प्रेरणम् । स्वभावादाङ्पूर्वः । आज्ञापयति । आज्ञापयते । भज, विश्राणने भाजयति । शृधु, प्रसहने । शर्धयति । अशीशृधत् । अशशर्धत् । यत, निकारोपस्कारयोः । रक, लग, आस्वादने । रघ, इत्येके । रग, इत्यन्ये । अञ्चु, विशेषणे । अञ्चयति । उदित्वाद्विभाषितो । णिच् । अञ्चति । एवं शृधुजसुप्रभृतीनामपि बोध्यम् । लिगि, चित्रीकरणे । लिङ्गयति । लिङ्गति । मुद, संसर्गे । मोदयति । मोदयते । त्रस, धारणे । ग्रहण इत्येके । वारण इत्यपरे । त्रासयति । अतत्रसत् । उध्रस उञ्छे । उकारो धात्ववयव । इत्येके । नेत्यन्ये । ध्रासयति । ध्रसति । उध्रासयति । मुच, प्रमोचने मोदने च । मोचयति । मोचयते । वस, स्नेहच्छेदापहरणेषु । वासयति । वासयते । चर, संशये । चारयति । अचीचरत् । अचीचरत । च्यु, हसने । सहन । इत्येके । च्यावयति । च्यावयते । च्युस, इत्येके । च्योसयति । भुवो, ऽवकल्कने । अवकल्कनं मिश्रीकरणमित्येके । चिन्तनमित्यन्ये । भावयति । कृपेश्च, कल्पयति । (आ स्वदः सकर्मकात्) आ कुस्मादितिवदभिविधावयमाकारस्तेन ग्रसिप्रभृतिभ्यः स्वद, आस्वादन इतिवक्ष्यमाणपर्यन्तेभ्यः सकर्मकेभ्य एव णिच् । ग्रस,

ग्रहणे। ग्रासयति फलम्। ग्रासयते। पुष, धारणे। पोषयत्याभरणम्। दल, विदारणे। दालयति। पट, पुट, लुट, तुजि, मिजि, पिजि, लुजि, भजि, लघि, त्रसि, पिसि, कुसि, दशि, कुशि, घट, घटि, बृहि, बर्ह, वल्ह, गुप, धूप, विच्छ, चीव, पुथ, लोकृ, लोचृ, णद, कुप, तर्क, वृतु, वृधु, भाषार्थाः। पाटयति। पोटयति। लोटयति। तुञ्जयति। तुञ्जति। एवं परेषाम्। घाटयति। घण्टयति। लोकयति।

## नाग्लोपिशास्वृदिताम् ॥ ७। ४। २॥

अग्लोपिनां शासेर्ऋदिताञ्चाङ्गानां चङ्परे णौ उपधाया ह्रस्वो न। अलुलोकत्। अलुलोचत्। वर्तयति। वर्धयति। उदित्त्वाद्वर्तति। वर्द्धतीति च। रुट, लजि, अजि, दसि, भृशि, रुशि, शीक, नट, पुटि, जिवि, रघि, लघि, अहि, रहि, महि, च। रोटयति। लञ्जयति। अञ्जयति। दंसयतीत्यादि। लडि, तड, नल, च। लण्डयति। ताडयति। नाडयति। पूरी, आप्यायने। पूरयति। ईदित्त्वान्निष्ठायामनिडर्थाद स्यापि णिज्विकल्पितः। तेन पूरति। पूर्यते इति श्यनि। रुज, हिंसायाम्। रोजयति। ष्वद, आस्वादने। स्वाद, इत्येके। स्वादयति। असिष्वदत्। दीर्घस्य त्वषोपदेशत्वात्। असिस्वदत्। इत्यास्वदीयाः। ( आधृषाद्वा ) ग०॥ धृष, प्रसहन इति वक्ष्यमाणसहिता विभाषितणिचो वेदितव्याः। अभिविधावाङ्। युज, पृच, संयमने। योजयति। अन्यत्र योजति। योक्ता। अयौक्षीत्। पर्चति। पर्चिता। अपर्चीत्। अर्च, पूजायाम्। अर्चयति। षह,

( १ ) अयमनुदात्तेदिति शाकटायनः, अस्य स्वादौ पाठोऽनार्षः। अनेनैव सिद्धेस्तस्यात्मनेपदितायाः शाकटायनमते माधवेनोक्तेः।

मर्षणे । साहयति । ईर, क्षेपे । ईरयति । ली, द्रवीकरणे । लाययति । लयति । लेता । वृजी, वर्जने । वर्जयति । वर्जति । वृञ्, आवरणे । वारयति । वरति । वरते । वरिता । वरीता । जॄ, वयोहानौ । जारयति । जरति । जरिता । जरीता । ज्रि च । ज्राययति, । रिच, वियोजनसम्पर्चनयोः । रेचयति । रेचति । रेक्ता । शिष, असर्वोपयोगे । शेषयति । शेषति । शेष्टा । लुङि । अशिक्षत् । विपूर्वोऽतिशये । विशेषयति । विशेषति । तप, दाहे । तापयति । तपति । तप्ता । तृप, तृप्तौ । सन्दीपन इत्येके । तर्पयति । तर्पति । तर्पिता । छृदी, सन्दीपने । छर्दयति । छर्दति । छर्दिता । छर्दिष्यति । सेसिचीति, इड्विकल्पो न । कृतादिसाहचर्याद्रौधादिकस्यैव तत्र ग्रहणात् । चृप, छृप, तृप, दृप, सन्दीपन इत्येके । चर्पयति । छर्पयति । तर्पयतीत्यादि । दृभी, भये । दर्भयति । दर्भिता, दृभ, सन्दर्भे । अस्यानीदित्वान्निष्ठायामपि सेट्त्वं विशेषः । तुदादेरीदितो ग्रन्थने दृभतीति । श्रथ, मोक्षणे । हिंसायामित्येके : श्राथयति । श्रथति । मी, गतौ । माययति । मयति, मेता । ग्रन्थ, बन्धने । ग्रन्थयति । ग्रन्थति । शीक, मर्षणे । शीकयति । शीकति । शीकिता । चीक, च । चीकयति । चीकति । चीकिता । अर्द, हिंसायाम् । अयं स्वरितेत् । अर्दयति । अर्दति । अर्दते । हिसि, हिंसायाम् । हिंसयति । हिंसति । इदित्वादेव णिज्विकल्पः सिद्ध इति युजादिपाठे प्रयोजनं चिन्त्यम् । हिनस्तीति । अमि । आङः, षद, पद्यर्थे । पद्यर्थो गतिः । आसादयति । आसीदतीति शपि सीदादेशः । आसत्ता । आसात्सीत् । शुन्ध, शौच

(१) 'लोलोः' इति नुक् तु न, लासाहचर्याद्धेतुमण्णावेव तस्य प्रवृत्तेः ।

(२) विभाषा लीयतेरित्यात्वं तु न, लीनातिलीयत्योर्यकानिर्देश इति भाष्यात् ।

कर्मणि । शुन्धयति । शुन्धति । शुन्धिता । अशुन्धीत् । अशुन्धिष्टाम् । छद, अपवारणे । स्वरितेत् । परस्मैपदीत्येके । छादयति । छदति । छदते । जुष, परितर्कणे । परितर्कणमूहो हिंसा वा । परितर्पणे-परितृप्तिक्रियायामित्येके । जोषयति । जोषति । प्रीतिसेवनयोर्जुषत इति तुदादौ । धूञ्, कम्पने । ( धूञ्प्रीञोर्नुग्वक्तव्यः ) णौ । धूनयति । धवति । धवते । प्रीञ्, तर्पणे । प्रीणयति । प्रयति । प्रयते । श्रन्थ, ग्रन्थ, सन्दर्भे । श्रन्थयति । ग्रन्थयति । श्रन्थति । ग्रन्थति । आप्ऌ, लम्भने । आपयति । आपति । आपत् । स्वरितेदयमित्येके । आपते । तनु, श्रद्धोपकरणयोः । उपसर्गाच्च दैर्घ्ये । तानयति । वितानयति । तनति । वितनति । चन, श्रद्धोपहननयोरित्येके । चानयति । चनति । वद, सन्देशवचने । स्वरितेत् । वादयति । वदति । वदते । वच, परिभाषणे । वाचयति । वचति । वक्ता । अवीवचत् । अवाक्षीत् । मान, पूजायाम् । मानयति । मानति । मानिता । भू, प्राप्तावात्मनेपदी वा । अयं प्राप्तौ वा णिचमुत्पादयति । तत्संनियोगेनात्मनेपदी चेत्यर्थः । भावयते । भवति । गर्ह, विनिन्दने । मार्ग, अन्वेषणे । मार्गयति । कठि, शोके । कण्ठयति । कठिः, प्रायेणोत्पूर्व उत्कण्ठायाम् । मृजू, शौचालङ्कारयोः । मार्जयति । मार्जति । ऊदित्वादिड्विकल्पः । मार्जिता । मार्ष्टा । मृष, तितिक्षायाम् । स्वरितेत् । मर्षयति । मर्षति । मर्षते । धृष, प्रसहने । धर्षयति । धर्षति । इत्याधृषीयाः । अथादन्ताः । कथ, वाक्यप्रबन्धे । कथयतीत्यादौ, अल्लोपस्य स्थानिवद्भावाद्यथायोगं वृद्धिगुणयोरभावः । कथयति । तथाऽचकथदित्यत्र "सन्वल्लघुनी"त्यस्य "दीर्घो लघो"रिति दीर्घस्य चानग्लोप इति निषेधः । वर, ईप्सायाम् । वरयति । अववरत् । गण, संख्याने । गणयति ।

(१) विचारणे भौवादिको नित्यसकर्मकः ।

## ई च गणः ॥ ७ । ४ । ९७ ॥

गणयतेरभ्यासस्येत्वादचङ्परे णौ । अजीगणत् । अजगणत् । शठ, श्वठ, सम्यगवभाषणे । शाठयति । श्वाठयति । अशशठत् । पट, वट, ग्रन्थे । पटयति । वटयति । रह, त्यागे । अररहत् । स्तन, गदी, देवशब्दे - स्तनयति - गदयति ' अजगदत् . ( पत, गतौ वा ) ग० । अयं विकल्पेन । णिचमुत्पादयति । वाऽदन्त इत्येके । पतयति । पतति । पताञ्चकार । अपतीत् । पातयति । अपीपतत् । पष, अनुपसर्गात् । गतावित्यत्रापि सम्बध्यते । पषयति । सोपसर्गत्वात् । प्रपषतीति । स्वर, आक्षेपे । आक्षेपो निन्दा । स्वरयति । रच, प्रतियत्ने । रचयति । कल; गतौ संख्याने च । कलयति । चह, परिकल्कने । परिकल्कनं, दम्भः । चहयति । अचचहत् । मह. पूजायाम् । महयति । सार, कृप, श्रथ, दौर्बल्ये । सारयति । कृपयति । स्पृह, ईप्सायाम् । स्पृहयति । भाम, क्रोधे । भामयति । अबभामत् । सूच, पैशून्ये । सूचयति । अषोपदेशत्वान्न षत्वम् । असूसुचत् । खेट, भक्षणे । खेटयति । तृतीयान्त इत्येके । खोट, इत्यन्ये । चोट, छेदे । चोटयति । अचुचोटत् । गोम, उपलेपने । गोमयति । अजुगोमत् । कुमार, क्रीडायाम् । कुमारयति । अचुकुमारत् । शील, उपधारणे । उपधारणमभ्यासः । शीलयति । अशिशीलत् । साम, सान्त्वप्रयोगे । अससामत् । साम सान्त्वनइति पठितस्येह पाठोऽग्लोपित्वादससामदिति सिद्धये । वेल, कालोपयोगे । वेलयति । काल इति पृथग्धातुरित्येके । तन्मते । कालयति । पल्यूल, लवनपवनयोः । पल्यूलयति । अपपल्यूलत् । वात, सुखसेवनयोः । गतिसुखसेवनेष्वित्येके । वातयति । अववातत् । गवेष, मार्गणे । गवेषयति । अजगवेषत् । वास, उपसेवायाम् । वासयति । निवास । आच्छादने । निवासयति । अनिनिवासत् । भाज, पृथक्कर्मणि । विभाज-

यति। अबभाजत्। सभाज, प्रीतिदर्शनयोः। प्रीतिसेवनयोरित्यन्ये। सभाजति। अससभाजत्। ऊन, परिहाणे। ऊनयति। ओः पुयण्जीति सूत्रे पयपोरितिवक्तव्ये वर्गप्रत्याहारजग्रहो लिङ्गं णि ण्यच आदेशो न स्याद्द्वित्वे कार्ये इति। यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठिते रूपे वाऽवर्णो लभ्यते तत्रैवायं निषेधः। ज्ञापकस्य सजातीयापेक्षत्वात् तेनाचिकीर्तदिति सिद्धम्। प्रकृते तु न शब्दस्यद्वित्वं तत उत्तरखण्डेऽल्लोपः। औनिनत्' मा भवानूननत्। ध्वन, शब्दे। अदध्वनत्। वेदे अध्वनयीत्। कूट, परितापे। परिदाहे इत्यन्ये। कूटयति। अचुकूटत्। सङ्केत, ग्राम, कुण, गुण, चामन्त्रणे। चकारेण कूट इत्यपेक्षत इत्येके। कूटयति। सङ्केतयति। ग्रामयति। कुणयति। गुणयति। अपरे तु। केत, श्रावणे निमन्त्रणे च। केतयति। निकेतयति। कुण। गुणचामन्त्रणे। चकारात्केत,कुणसङ्कोचने इति। स्तेन, चौर्य्ये। अनेकाच्त्वादषोपदेशत्वम्। स्तेनयति। अतिस्तेनत्। आगर्वादात्मनेपदिनः। इतः परे गर्व माने इति वक्ष्यमाणपर्य्यन्तादात्मनेपदिनः। पद,गतौ। पदयते। अपपदत्। गृह, ग्रहणे। गृहयते। मृग, अन्वेषणे। मृगयते। मृग्यतीति कण्ड्वादौ। कुह, विस्मापने। कुहयते। शूर,वीर, विक्रान्तौ। शूरयते। अशुशूरत। वीरयते। स्थूल, परिबृंहणे। स्थूलयते। अर्थ, उपयाच्ञायाम्। अर्थयते। आर्तथत। सत्र, सन्तानक्रियायाम्। असससत्रत। गर्व, माने। गर्वयते। इत्यागर्वीयाः। सूत्र। वेष्टने। विमोचन इत्यन्ये। सूत्रयति। असुसूत्रत्। मूत्र, प्रस्रवणे। मूत्रयति।

(१) पिपविषते, युयविषतीत्यत्रोवर्णान्तस्यैवादेशनिर्देशाद् द्वित्वेनाभ्यासोवर्णस्यैवार्थं पपयो रित्यपेक्षितम्।

(२) औजढत्, चुक्षावयिषतीत्यादि सिद्ध्यर्थं तथोक्तिः।

(३) केचिद् भाष्यानुसारिणस्तु द्वित्वप्रवृत्तिवेलायाम वर्णपरत्वसम्पादकादेशस्थानिनोऽच आदेश इत्याद्युक्त्या औनिनदित्येवाभिप्रयन्ति।

अमुमूत्रत्। रूक्ष, पारुष्ये। रूक्षयति। अरुरूक्षत्। पार, तीर, कर्मसमाप्तौ। पारयति। तीरयति। अपपारत्। अतितीरत्। पुट, संसर्गे। पुटयति। धेक्, दर्शन इत्येके। अदिधेकत्। कत्र, शैथिल्ये। कत्रयति। अचकत्रत्। कर्त्त, इत्यप्येके। कर्त्तयति। (प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च) प्रातिपदिकाद्धात्वर्थे णिच् तस्मिंश्चेष्ठनीव कार्य्यम्। इदञ्च तत्करोतीति, तदाचष्टे, तेनातिक्रामतीनां वक्ष्यमाणत्वात्तद्विषयं, तदादीन्यस्यैव प्रपञ्चभूतानीत्यर्थः। पटुमाचष्टे। पटयति। लघयतीत्यादि। अपीपटत्। अलीलघत्। अत्र परत्वाद् वृद्धौ, णाविष्ठवदिति टिलोपः। णौचङीत्यत्र भाष्ये तु वृद्धे र्लोपो बलीयानिति स्थितम्। एवं च, अपपटत् इत्यपि साध्विति। तत्करोति तदाचष्टे॥ ग०॥ तदितिद्वितीयान्तोपलक्षणम्। तत्करोत्याचष्टे इत्यत्र धात्वर्थमात्रं णिजर्थो न कर्त्तापि तथा चैवोदाहृतम्। तेनातिक्रामति॥ ग०॥ अत्रापि तेनेति तृतीयान्तोपलक्षणम्। अश्वेनातिक्रामति अश्वयति। हस्तिनाऽतिक्रामति, हस्तयति। धातुरूपञ्च। ग० ॥ णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते। चकारोऽनुक्तसमुच्चयार्थस्तथा च हेतुमतिचेति सूत्रे वार्तिकम् [आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमिति] दुष्टवधमाचष्टे दुष्टं घातयति। इह दुष्ट हन् इ इति स्थिते।

हनस्तोऽचिण्णलोः॥ ७। ३। ३२॥

हन्तेस्तकारोऽन्तादेशश्चिण्णल्भिन्ने ञिति णिति। दुष्टमजीघतत्। कर्तृकरणाद्धात्वर्थे। ग०॥ अत्र कर्तृग्रहणं, करणस्य विशेषणम्। कर्तुः करणाद्धात्वर्थे णिजिति सूत्रार्थः। करिभिरवबध्नाति अवकरयति। असिना हन्ति-असयति। परशुना छिनत्ति-परशयति। दात्रेण लुनाति दात्रयति। वष्क, दर्शने। वष्कयति। चित्र, करणे। आलेख्यकरण-

इत्यर्थः । चित्रयति । अचिचित्रत् । कदाचिद्दर्शने ॥ ग० ॥ चित्र इत्ययं कदाचिद्दर्शनेऽद्भुतदर्शने णिचमुत्पादयतीत्यर्थः । चित्रयति । अंस, समाघाते । अंसयति । वट, विभाजने । वटयति । लज, प्रकाशने । लजयति । वटि, लजि, इत्येके । वण्टयति । लञ्जयति । मिश्र, सम्पर्के । मिश्रयति । संग्राम, युद्धे । अयमनुदात्तेत् । अकारप्रश्लेषात् । संग्रामयते । अससंग्रामत । स्तोम, श्लाघायाम् । स्तोमयति । छिद्र, कर्णभेदने । छिद्रयति । करणभेदन इत्येके । कर्णेति धात्वन्तरमित्यन्ये । अन्ध, दृष्ट्युपघाते । उपसंहार इत्यन्ये । अन्धयति । आन्दधत् । दण्ड, दण्डनिपातने । दण्डयति । अददण्डत् । अङ्क, पदे लक्षणे च । अङ्कयति । आञ्चकत् । अङ्ग, च । अङ्गयति । आञ्जगत् । सुख, दुःख, तत्क्रियायाम् । सुखयति । दुःखयति । रस, आस्वादनस्नेहनयोः । रसयति । व्यय, वित्तसमुत्सर्गे । व्यययति । अवव्ययत् । रूप, रूपक्रियायाम् । रूपस्य दर्शनं करणं वा रूपक्रिया । रूपयति । अरुरूपत् । छेद, द्वैधीकरणे । छेदयति । अचिच्छेदत् । छद, अपवारण इत्येके । छदयति । लाभ, प्रेरणे । लाभयति । व्रण, गात्रविचूर्णने । व्रणयति । वर्ण, वर्णक्रियाविस्तारगुणवचनेषु । वर्णक्रिया, वर्णकरणं । सुवर्णं वर्णयति । कथां वर्णयति । विस्तृणातीत्यर्थः । राजानं वर्णयति स्तौतीत्यर्थः । बहुलमेतन्निदर्शनम् ।

---

(१) अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये । वण्टापयति । लञ्जापयति ।

(२) तेन प्रश्लिष्टस्येत्संज्ञा प्रकृत्यकारस्य लु इष्ठवदिति टिलोपः। तथा चाग्लोपादससंग्रामतेत्यत्र नोपधाह्रस्वः इति कैयटादयः परेतु मानाभावान्नैतत्क्षमन्ते इत्यन्यत्र विस्तरः ।

चुरादावदन्तधातुनिदर्शनं बहुलं वेदितव्यम् । अतोऽनुक्ता अपीह धातवो वेदितव्याः । तद्यथा । पर्ण, हरितभावे । पर्णयति । विष्क, दर्शने । विष्कयति । क्षप, प्रेरणे । क्षपयति । वस, निवासे । वसयति । तुत्थ, आवरणे । तुत्थयति । एवं गडयति । आन्दोलयति । डलयति । वर्णयति । स्फुटयति । प्रेङ्खोलयतीत्यादि । अन्ये तु । भ्वादिष्वेतदन्तेषु दशगणेषु धातूनां पाठो निदर्शनाय । तेन स्तम्भुप्रभृतयः सौत्राः । चुलुम्पादयो वाक्यकारीयाः प्रयोगाः सिद्धाः । विक्लवत्यादयश्च गृह्यन्त इति ।

विगलन्त्याशु जीमूता विक्लवन्ते दिवि ग्रहाः ॥
क्षयन्ति विद्युतः प्रावृट् क्षीयन्ते कामविग्रहाः ॥ १ ॥

इत्यादयः प्रयोगा उपपद्यन्त इत्याहुः । णिङङ्गान्निरसने । ग० । अङ्गवाचिनः प्रातिपदिकान्निरसने णिङ् । ङकार आत्मनेपदार्थः । हस्तौ निरस्यति हस्तयते । पादयते । श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च ॥ ग० ॥ श्वेताश्वादीनां चतुर्णां यथासंख्यमश्वतरेतकइत्येते लुप्यन्ते । णिङ् च धात्वर्थे । श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते । एवमश्वयते । गालोडयते । गालोडितं-वाचांविमर्शः । ह्वरयते । केचित्तु णिचमेवानुवर्तयन्ति । तन्मते परस्मैपदमपि । पुच्छादिषु धात्वर्थ इत्येव सिद्धम् । पुच्छादिषु प्रातिपदिकेभ्यो धात्वर्थ इत्येव सिद्धमिति केचित् । आत्मनेपदं णिजन्ताद् बहुलवचनाद्विज्ञेयमिति । अन्ये तु पुच्छादीनां पुच्छभाण्डेत्यनेन णिङुक्तत्वादिह णिङ् नास्तीति व्याचक्षते । पुच्छमुदस्यति उत्पुच्छयते । भाण्डानि समाचिनोति सम्भाण्डयते । चीवराण्यर्जयति परिधत्ते वा संचीवरयते ।

इति चुरादिगणः समाप्तः ।

( १ ) भीमसेनस्य वाक्यमेतदिति ज्ञानेन्द्रसरस्वती । केचित्तु गणसूत्रमेव मन्यते ।

# अथ कण्ड्वादयः।

कण्ड्वादिभ्यो यक् ॥ ३ । १ । २७ ॥

एभ्यो धातुभ्यो नित्यं यक् स्वार्थे । धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ॥ आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः॥ एते धातवः प्रातिपदिकानि च ।

कण्डूञ्, गात्रविघर्षणे । कण्डूयति । कण्डूयते । कण्डूयाञ्चक्रे । कण्डूयिता । कण्डूयिष्यति । कण्डूयिषति । कण्डूयिषाति । कण्डूयतु । अकण्डूयत् । कण्डूयेत् । कण्डूय्यात् । अकण्डूयीत् । अकण्डूयिष्यत् । मन्तु, अपराधे । रोष इत्येके । मन्तूयति । कश्चिदिमं ञितमाह । वल्गु, पूजामाधुर्ययोः । वल्गूयति । असु, उपतापे । असूयति । अस्, असुभ्, इत्येके । अस्यति । असूयति । असूयते । लेट्, लोट्, धौर्त्ये पूर्वभावे स्वप्ने च । दीप्तावित्येके । लेटयति । लोटयति । लेटिता । लोटितेत्यादि । लेला, दीप्तौ । लेलायति । इरस्, इरज्, इरञ्, ईर्ष्यायाम् । इरस्यति । इरज्यति । ईर्यति । ईर्यते । इयस्, ऐश्वर्ये इत्यपीति केचित् । उषस्, प्रभातीभावे । उषस्यति । वेद, धौर्त्ये, स्वप्ने च । वेद्यति । मेधा, आशुग्रहणे । मेध्यति । कुषुभ्, चेपे । कुषुभ्यति । मगध, परिवेष्टने । नीचदास्य इत्यन्ये । मगध्यति । तन्तस्, पम्पस्, दुःखे । सुख, दुःख, तत्क्रियायाम् । सुख्यति । दुःख्यति । सुखं दुःखं चानुभवतीत्यर्थः । सपर, पूजायाम् । सपर्यति । अरर,

( १ ) गुणनिषेधार्थेन ङित्वेन धातुत्वं, केषांचित् कण्ड्वादीनां दीर्घान्तपाठाच्च प्रातिपदिकत्वमवसीयते ।

( २ ) अवयवे कृतं लिङ्गमिति न्यायात्समुदायस्य ञित्वादात्मनेपदम् ।

आराकर्म्मणि । अरर्यति । भिषज, चिकित्सायाम् । भिषज्यति । भिष्णज्, उपसेवायाम् । भिष्णज्यति । इषुध, शरधारणे । इषुध्यति । चरण, वरण, गतौ । चरण्यति । वरण्यति । चुरण, चौर्य्ये । चुरण्यति । तुरण, त्वरायाम् । तुरण्यति । भुरण, धारणपोषणयोः । भुरण्यति । गद्गद, वाक्स्खलने । गद्गद्यति । एला, केला, खेला, विलासे । एलायति । केलायति । खेलायति । इला, इत्यन्ये । इलायति । खेला, स्खलने च । लेखेति केचित् । अदन्तोऽप्ययमित्यन्ये । खेल्यति । लिट्, अल्पकुत्सनयोः । लिट्यति । लाट, जीवने । लाट्यति । हृणीङ्, रोषणे लज्जायाञ्च । हृणीयते । महीङ्, पूजायाम् महीयते । रेखा, श्लाघाऽऽसादनयोः । रेखायति । द्रवस्, परितापपरिचरणयोः । द्रवस्यति । तिरस्, अन्तर्द्धौ । तिरस्यति । अगद, नीरोगत्वे । अगद्यति । उरस्, बलार्थे । उरस्यति । तरण, गतौ । तरण्यति । पयस्, प्रसृतौ । पयस्यति । संभूयस्, प्रभूतभावे । सम्भूयस्यति । अम्बर, सम्बर, संभरणे । अम्बर्यति । सम्बर्यति । आकृतिगणोऽयम् । अस्याकृतिगणत्वाद्धैधनादिभ्योरायति, धनायतीत्याद्यपि ।

इति कण्ड्वादिप्रक्रिया समाप्ता ॥



(१) पूज्यमानकर्तृ काऽत्र सा । महीयते-पूजामधिगच्छतीत्यर्थः ।

(२) आसादनं-प्राप्तिः ।

# अथ नामधातवः ।

## सुप आत्मनः क्यच् ॥ ३ । १ । ८ ॥

एषितृसम्बन्धिनः सुबन्तादिषिकर्म्मण इच्छायामर्थे क्यज्वा । धातववयवत्वात् सुब्लुक् । [1]

## क्यचि च ॥ ७ । ४ । ३३ ॥

अस्य ईः क्यचि । आत्मनः पुत्रमिच्छति पुत्रीयति । वान्तो-यि प्रत्यये । गव्यति । नाव्यति । लोपः शाकल्यस्येति तु न । अपदा-न्तत्वात् । तथाहि ।

## नः क्ये ॥ १ । ४ । ४५ ॥

क्ये परतोनान्तमेव पदम् । सन्निपातपरिभाषया क्यचो यस्य लोपो न । गव्याञ्चकार । गव्यिता । नाव्याञ्चकार । नाव्यिता । न लोपः । राजीयति । राजीयाञ्चकार । राजीयिता । राजीयिष्यति । राजीयिषति । राजीयिषाति । राजीयतु । अराजीयत् । राजीयेत् । राजीय्यात् । अराजीयीत् । अराजीयिष्यत् । प्रत्ययोत्तरपदयोश्च ।

---

( १ ) पदविधित्वेन समर्थपरिभाषाप्रवृत्त्या महान्तं पुत्रमिच्छतीत्यादेर्नक्यान्न ।

( २ ) गोसमानाक्षरनान्तादिति त्वेकदेशिमतं न सिद्धान्तः । अतएव नःक्ये इति सूत्रे वाच्यतीतिभाष्ये प्रयुक्तम् । वाच्यतीत्यत्र संप्रसारणं तु न, वचतोऽनाप्य उच्यमान-मित्युक्तत्वात् ।

( ३ ) क्यचित्येत्यवर्णस्य ईत्वे कर्त्तव्ये पूर्वत्रासिद्धमिति न लोपोऽसिद्धो न भवति "नलोपः सुप्स्वर" इति नियमात् ।

त्वद्यति । मद्यति । एकार्थयोरित्येव । युष्मद्यति । अस्मद्यति । अत्र त्वमौ न । आत्मनो गिरमिच्छति । हलि चेति दीर्घः । गीर्यति । पूर्यति । धातोरित्येव । नेह । दिवमिच्छति दिव्यति । अदस्यति । आत्मनः कर्तारमिच्छति । रीङ् ऋत इति रीङादेशः । कर्त्रीयति ।

क्यच्व्योश्च ॥ ६ । ४ । १५२ ॥

क्ये च्वौ च परतो हलः परस्यापत्ययकारस्य लोपः । गार्गीयति । वात्सीयति । वाच्यति । अकृत्सार्वधातुकेति दीर्घः । कवीयति । समिध्यति ।

क्यस्य विभाषा ॥ ६ । ४ । ५० ॥

हलः परस्य क्यस्य वा लोप आर्द्धधातुके । आदेः परस्य । अतो लोपः । तस्य स्थानिवत्त्वाल्लघूपधगुणो न । समिधिता । समिध्यिता । [ क्यचि[1] मान्ताऽव्ययप्रतिषेधः ] इदमिच्छति । किमिच्छति । उच्चैरिच्छति । स्वरिच्छतीत्यादि ।

अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु ॥ ७ । ४ । ३४ ॥

अशनायादिषु ईत्वाभाव उदकशब्दस्योदनादेशश्च निपात्यते बुभुक्षादिषु । अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् । अशनीयति । उदकीयति । धनीयति ।

न[2] छन्दस्यपुत्रस्य ॥ ७ । ४ । ३५ ॥

पुत्रभिन्नस्यावर्णस्य क्यचि न ईत्वदीर्घौ छन्दसि । मित्रयति ।

---

( १ ) मान्तप्रकृतिकसुबन्तादित्यर्थस्तेन पुत्रमिच्छतीत्यादौ न दोषः ।

( २ )-निषेधोऽयमीत्वमात्रस्य न, किन्तु दीर्घस्यापि । अशनायस्यादितिसूत्रमेवात्र ज्ञापकम् । अन्यथा दीर्घेणैव सिद्धत्वादात्त्ववचनमनर्थकमेव स्यात् ॥

अपुत्रस्येति । किम् । पुत्रीयन्तः । सुदानवः । अत्यल्पमिदमुच्यते । (अपुत्रादीनामिति वक्तव्यम्) इहापि यथास्यात् । जनीयन्तोऽन्वग्रवः ।

## क्याच्छन्दसि ॥ ३ । २ । १७० ॥

क्यजन्तादुश्छन्दसि विषये तच्छीलादिषु कर्तृषु । मित्रयुः । संस्वेदयुः । देवाञ्जिगातिसुम्नयुः ।

## दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति ॥ ७ । ४ । ३६ ॥

दुरस्युरित्यादीनि छन्दसि निपात्यन्ते । दुष्टमिच्छति दुरस्युः । दुष्टीयत्यन्यत्र । द्रविणमिच्छति द्रविणस्युः । द्रविणीयत्यन्यत्र । वृषमिच्छति, वृषण्यति । वृषीयत्यन्यत्र । रिष्टमिच्छति, रिषण्यति । रिष्टीयत्यन्यत्र ।

## अश्वाघस्यात् ॥ ७ । ४ । ३७ ॥

अश्वाघयोरात् क्यचि छन्दसि । अश्वायन्तो मघवन् । मा त्वा वृका अघायवो विदन् । लोके । अश्वीयति । अघीयति ।

## देवसुम्नयोर्यजुषि काठके ॥ ७ । ४ । ३८ ॥

देवसुम्नयोराच्छन्दसि क्यचि यजुषि काठके । देवायन्तो यजमानाः । सुम्नायन्तो हवामहे । यजुर्ग्रहणात् । देवाञ्जिगाति सुम्नयुः । अत्र न । काठकग्रहणात् । सुम्नयुरिद्‌मासीत् । अत्र न ।

(१)-अत्रदुष्टशब्दस्य-दुरस् । द्रविणशब्दस्य-द्रविणस् । वृषस्य-वृषण् । रिष्टस्य-रिषण्भावो निपात्यते ।

कव्यध्वरपृतनस्यर्चि लोपः ॥ ७ । ४ । ३९ ॥

ऋग्विषये कव्यादीनां लोपः क्यचि । कव्यन्तः सुमनसः । अध्वर्यन्तः । पृतन्यन्तस्तिष्ठन्ति ।

अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ ७ । १ । ५१ ॥

अश्वादीनामसुक् क्यचि आत्मप्रीतौ । ( अश्ववृषयोर्मैथुनेच्छायाम् ) अश्वस्यति वडवा । वृषस्यति गौः । (क्षीरलवणयोर्लालसायाम् ) क्षीरस्यति बालः । लवणस्यति उष्ट्रः । आत्मप्रीतावेव । नेह । अश्वीयति । अपर आह-( सर्वप्रातिपदिकेभ्यो लालसायामिति वक्तव्यम् ) दध्यस्यति । मध्वस्यति (सुग्वक्तव्यः) दधिस्यति । मधुस्यति ।

काम्यच्च ॥ ३ । १ । ९ ॥

एषितृसंबन्धिन इषिकर्म्मणः सुबन्तादिच्छायामर्थे काम्यच् । आत्मनः पुत्रमिच्छति । पुत्रकाम्यति । वस्त्रकाम्यति । यशस्काम्यति । सर्पिष्काम्यति । मान्ताव्ययेभ्योऽपि । किंकाम्यति । स्वः काम्यति । उच्चैः काम्यति ।

उपमानादाचारे ॥ ३ । १ । १० ॥

उपमानात्सुबन्तात्कर्म्मण आचारेऽर्थे क्यच्वा । पुत्रमिवाचरति पुत्रीयति शिष्यम् । मित्रीयति शत्रुम् । इत्यादि । ( अधिकरणाच्च ) कुट्यामिवाचरति कुटीयति प्रासादे । प्रासादीयति कुट्याम् । पर्य्यङ्कीयति मञ्चके ।

( १ )-वार्तिकमिदं दधिमधुशब्द विषयकमेवेति माधवः ।

## कर्तुः क्यङ् सलोपश्च ॥ ३ । १ । ११ ॥

उपमानात्कर्तुः सुबन्तादाचारेऽर्थे वा क्यङ् सान्तस्य च लोपः। ( सलोपश्च वा ) (ओजसोऽप्सरसो नित्यम्) श्येनइवाचरति श्येनायते काकः। पण्डितायते मूढः। राजायते। पथायते। ओजश्शब्दो वृत्तिविषये तद्वति। ओजस्वीवाचरतीति। ओजायते। अप्सरायते। यशायते। यशस्यते। विद्वायते। विद्वस्यते। त्वद्यते। मद्यते। अनेकार्थत्वे तु। युष्मद्यते। अस्मद्यते। क्यङ्मानिनोश्च। कुमारीवाचरति। कुमारायते। हरिणीवाचरति, हरिणायते। गुर्वीव गुरूयते। सपत्नीव सपत्नायते। सपतीयते। सपत्नीयते। युवतिरिव युवायते। पट्वीमृद्व्याविव पट्वीमृदूयते। न कोपधायाः पाचिकायते। (आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा) पक्षे क्यङ्। अवगल्भते। क्लीबते। होडते। पक्षे अवगल्भायते। क्लीबायते। होडायते। भूतपूर्वादप्यनेकाच आम्। एतद्वार्तिकारम्भसामर्थ्यात्। नचावगल्भतइत्यादिसिद्धिस्तत्फलम्। केवलानामेवाचारेऽपि वृत्तिसंभवात्। धातूनामनेकार्थत्वात्। अवगल्भाञ्चक्रे। अवगल्भिष्यते। एवं क्लीबाञ्चक्रे। होडाञ्चक्रे। ( सर्वप्रातिपदिकेभ्य आचारे क्विब्वा वक्तव्यः ) अश्व इवाचरति अश्वति। अश्वायते। गर्दभायते। अ इवाचरति अति। अतः। अन्ति। लिटि। आञ्चकार। कविरिवाचरति। कवयति। आशीर्लिङि कवीयात्। अकवयीत्। केचि-

---

( १ )–नान्तस्यैव पदत्वात्सस्य रुत्वं न।

( २ )–शत्रुपर्यायात्सपत्नशब्दाच्छार्ङ्गरवादिङीनन्तात्क्यङि पुंवद्भावे-अकृत्सार्वधातुकेति दीर्घे च रूपमिदम्।

( ३ )–अवगल्भादयः पचाद्यजन्ताः। क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वञ्चाच्प्रत्ययस्य प्रतिज्ञायते। तेन तङ्। वार्तिकेऽत्र तूपसर्गविशिष्टपाठात् केवलादुपसर्गान्तरविशिष्टाच्च तङ् न।

नामधातोरपि वृद्धिमिच्छन्ति। अकवायीत्। विरिवाचरति। वयति। विवाय। विव्यतुः। अवयीत्। अवायीत्। श्रीरिव श्रयति। शिश्राय। शिश्रियतुः। शिश्रियुः। श्रीयात्। पितेवाचरति पितरति। आशिषि रिङ्। पित्रियात्। भ्रूरिवाचरति। भ्रवति। अत्रगातिस्थेति, भुवोवुगिति, भवतेर इति च नभवन्ति। अभिव्यक्तत्वेन धातुपाठस्थस्यैव। तत्र ग्रहणात्। बुभाव। अभावीत्। द्रुरिव द्रवति। णिश्रीति। चङ् न। अद्रावीत्।

## भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ ३। १। १२॥

अच्व्यन्तेभ्यश्च्विविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् हलन्तानाञ्च लोपः। अभृशो भृशो भवति भृशायते। अच्वेरिति पर्युदासबलादभूततद्भाव इतिलब्धम्। तेनेह न। क्व दिवा भृशा भवन्ति। ये रात्रौ भृशानक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थः। सुमनस्। अस्य सलोपः। सुमनायते। सुमनायाञ्चक्रे। सुमनायिता। सुमनायिष्यते। सुमनायिषतै। सुमनायिषातै। सुमनायताम्। चुरादौ संग्रामयुद्धे इतिपठ्यते तत्र संग्रामेति प्रातिपदिकम्। तस्मात्तत्करोतीति णिच् सिद्धस्तत्सन्नियोगेनानुबन्ध आसज्यते। युद्धे योऽयं ग्रामशब्द इत्युक्तेऽपि सामर्थ्यात्संग्रामशब्दे लब्धे विशिष्टपाठो ज्ञापयति। उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्क्रियते। इति तेन मनश्शब्दात्प्रागट्। स्वमनायत। एवंचावागल्भत। अवागल्भिष्टेत्यादावप्यवेत्यस्यपृथक्करणं बोध्यम्। ज्ञापकं च सजातीयविषयम्। तेन यत्रोपसर्गरूपं सकलं श्रूयते नत्वादेशेनापहृतं तत्रैव पृथक्कृतिः। एवंच आऊढः ओढः सङ्वाचर्य्य ओढायि-

(१) भृशालोकाइत्यर्थः।

(२) नत्वयंधातुः प्रसेराचेत्यौणादिकेन मन्प्रत्ययान्ततया निष्पादितत्वात्। पचक्षवक्ष्यमाणज्ञापकं संगच्छतइतिभावः।

त्वा। अत्र उन्मनाय्य,अवगल्भ्येतिवन्नल्यप् । ज्ञापकस्य विशेषविषयत्वे षाष्ठं वार्तिकं तद्भाष्यञ्च प्रमाणम् । तथाहि । ( उस्योमाङ्क्ष्वाटः प्रतिषेधः ) उसिओमाङोश्च परयोराटः पररूपं नेत्यर्थः। उस्रामैच्छत् । औस्रीयत् । औङ्कारीयत् । औढीयत् । आटश्चेति चशब्देनपुनर्वृद्धिविधानादिदं सिद्धमिति षाष्ठे स्थितम् ॥

लोहितादिडाज्भ्यः क्यष् ॥ ३ । १ । १३ ॥

च्विविषयेभ्यो लोहितादिभ्यो डाजन्ताच्च क्यष् भवत्यर्थे ।

वा क्यषः ॥ १ । ३ । ९० ॥

क्यषन्तात्कर्तरि लस्य परस्मैपदम्वा ॥ अलोहितो लोहितो भवति लोहितायते । लोहितायति । अत्राच्वेरित्यनुवृत्त्याऽभूततद्भावविषयत्वं लब्धम् । तच्च लोहितशब्दस्यैव विशेषणं न तु डाचोऽसम्भवात् । नाप्यादिशब्दग्राह्याणाम् । तस्य प्रत्याख्यानात् । तथाच वार्तिकम् ।( लोहितादिडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि ) अनीलो नीलो भवति नीलायते पटः । अत्र क्यषन्तादुभयपदं न । लिङ्गविशिष्टपरिभाषया लोहिनीशब्दात्क्यष् लोहिनीयति । लोहिनीयते । इत्यपि । पटपटायति । पटपटायते । कृभ्वस्तियोगं विनापि डाच् । डाजन्तात्क्यषो विधानसामर्थ्यात् ।

कष्टाय क्रमणे ॥ ३ । १ । १४ ॥

चतुर्थ्यन्तात्कष्टशब्दात्क्रमणेऽर्थे क्यङ् । क्रमणमनार्जवः ।

---

( १ ) उद्मा-गौः ।

( २ )उच्चारणसामर्थ्यात् कयच इव क्यषोपि ककारः श्रूयेतेतितु न वाच्यं, क्यषः ककारस्य भाष्ये प्रत्याख्यानात् ।

( ३ ) न तु क्यङ् । क्यङि सति तङ् स्यात्क्यङ् मानिनोश्चेति पुंवद्भावश्च ।

कष्टाय कर्मणे, क्रामति, कष्टायते । कष्टं कर्त्तुं कुटिलमाचरतीत्यर्थः । ( सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् ) कण्वस्य पापस्य चिकीर्षा कण्वचिकीर्षा सा चेह वृत्तिविषये, सत्रादयोऽपि कण्ववचनाः । एवं च पापवचनेभ्यो द्वितीयान्तेभ्यः सत्रादिभ्यश्चिकीर्षायां प्रत्ययइतिवार्त्तिकार्थः । सत्रायते,इत्यादि । अन्यत्र, कष्टं क्रामतीत्यादि विग्रह एव ।

## कर्म्मणोरोमन्थतपोभ्यां वर्त्तिचरोः ॥ ३ । १ । १५ ॥

रोमन्थतपोभ्यां कर्म्मभ्यां वर्त्तिचरोरर्थयोः क्यङ् वा । कर्म्मणइत्यवयवापेक्षमेकवचनम् । ( हनुचलने इति वक्तव्यम् ) रोमन्थं वर्त्तयति रोमन्थायते । [ तपसः परस्मैपदञ्च ] तपश्चरति तपस्यति । हनुचलने वक्तव्यमित्युक्तत्वात् । कीटो रोमन्थं वर्त्तयतीत्यत्र क्यङ् न ।

## वाष्पोष्मभ्यामुद्वमने ॥ ३ । १ । १६ ॥

वाष्पोष्मभ्यां कर्म्मभ्यामुद्वमनेऽर्थे क्यङ् वा । वाष्पमुद्वमति वाष्पायते, ऊष्मायते [ फेनाच्चेति वक्तव्यम् ] फेनमुद्वमति, फेनायते ।

## शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥ ३ । १ । १७ ॥

कण्वशब्दः पापवचनः । करणं क्रिया करोत्यर्थः । शब्दादिभ्यः कर्म्मभ्यः करोत्यर्थे क्यङ् वा । शब्दं करोति शब्दायते । एवं वैरायते । कलहायते । अभ्रायते । कण्वायते । मेघायते । पक्षे तत्करोतीति णिजपीष्यत इति केचित् । शब्दयति । (सुदिनदुर्दिनाभ्याञ्च) सुदिनं करोति सुदिनायते । दुर्दिनायते । ( नीहाराच्च ) नीहारं करोति, नीहारायते । ( अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टा

---

( १ ) चर्वितस्य चर्वणं-रोमन्थः । मृगैर्वर्तितरोमन्थमुटजाङ्गनभूमिष्विति रघौ ।

ग्रहणम् ) पोटा स्त्रीपुंसलक्षणा । अटां करोति अटायते । अट्टायते । शीकायते । कोटायते । पोटायते । सोटायते । प्रुष्टायते । प्लुष्टायते ।

सुखादिभ्यः कर्तृवेदनायाम् ॥ ३ । १ । १८ ॥

सुखादिभ्यः कर्म्मभ्यो वेदनायामर्थे क्यङ् वा सुखादीनि कर्तृसम्बन्धीनि चेत्स्युः । सुखं वेदयते सुखायते । दुःखायते । करुणायते । कृपणायते । इत्यादि । कर्तृग्रहणं किम् । सुखं वेदयते प्रसाधको देवदत्तस्य ।

नमोवरिवश्चित्रङः क्यच् ॥ ३ । १ । १९ ॥

नमस् वरिवस्, चित्रङ् एभ्यः करणे वा क्यच् । नमस्यति देवान् पूजयतीत्यर्थः । वरिवस्यति गुरून् । शुश्रूषत इत्यर्थः । चित्रीयते । विस्मयते इत्यर्थः । विस्मापयत इत्यन्ये ।

पुच्छभाण्डचीवराण्णिङ् ॥ ३ । १ । २० ॥

पुच्छादिभ्यः कर्म्मभ्यः करणेऽर्थे णिङ् । ङकारस्तङर्थः ( पुच्छादुदसने व्यसने पर्यसने च विविधं विरुद्धं वोत्क्षेपणं व्यसनम् । पुच्छमुदस्यति-उत्क्षिपति । उत्पुच्छयते । विपुच्छयते । परिपुच्छयते । ( भाण्डात्समाचयने ) भाण्डानि समाचिनोति, सम्भाण्डयते । राशीकरोतीत्यर्थः । समभाण्डत । ( चीवरादर्जने परिधाने च ) चीवराण्यर्जयति परिधत्ते वा संचीवरयते भिक्षुः ।

---

( १ )-यदिष्टं सुखं तद्भिन्नो वदनाकर्तेति वाक्यमेव ।

( २ )-चित्रङः क्यज्विधानमीश्वरार्थं ङित्करणन्तु तङर्थम् ।

( ३ )-पुच्छादयः स्वकर्मकोदसनक्रियायां लाक्षणिकाः । ततः स । पं णिङ् । णाविष्ठवदिति टिलोपः ।

## मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ ३ । १ । २१ ॥

एभ्यः करणे णिच्। मुण्डं करोति मुण्डयति माणवकम्। मिश्रयत्यन्नम्। श्लक्ष्णयति वस्त्रम्। लवणयति व्यञ्जनम्। ( व्रताद्भोजने तन्निवृत्तौ वा ) पयो व्रतयति, पयोभुङ्क्तेइत्यर्थः। वृषलान्नं व्रतयति परिहरतीत्यर्थः। सम्वस्त्रयति प्रावरणम्। हलं गृह्णाति। हलयति। एवं कलयतीत्यादि। हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थं परत्वाद्वृद्धौ सत्यामपीष्ठवद्भावेन अग्येव लुप्यते। अतः सन्वद्भावदीर्घौ न। अजहलत्। अचकलत्। कृतं गृह्णाति कृतयति। तूस्तानि विहन्ति वितूस्तयति। विहननद्योतनाय वेः प्रयोगः। सत्यापपाशेत्यत्रानुवृत्तं करणग्रहणं क्रियाविशेषोपलक्षणम्, अत्र सत्यापेतिनिर्देशेन णिचः सन्नियोगेन सत्यस्यापुक्। टिलोपाभावश्च। तथा च वार्तिकम्। [ अर्थवेदसत्यानामापुग्वक्तव्यः ] अर्थापयति। वेदापयति। सत्यापयति। पाशंविमुञ्चति विपाशयति। रूपं पश्यति, रूपयति। वीणयोपगायत्युपवीणयति। तूलेनानुकुष्णाति, अनुतूलयति। तृणाग्रं तूलेनानुघट्टयतीत्यर्थः। श्लोकैरुपस्तौति उपश्लोकयति। सेनयाऽभियाति अभिषेणयति। उपसर्गात्सुनोतीत्यादिना षत्वम्। अभ्यषेणयत्। प्राक्सितादिति षः। अभिषिषेणयिषति। स्थादिष्वभ्यासेनेति साभ्यासस्य षत्वम्। लोमा-

---

( १ ) अत्र केचित्प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे मुण्डादिसूत्रे केषांचिद्ग्रहणम् सापेक्षेभ्योपि णिजर्थमित्याहुः। अथवा गमकत्वान्मुण्डयति माणवकमित्यत्र णिज्भवति श्मश्रुनागमकत्वादित्यपि तत्र भाष्ये स्पष्टम्।

( २ ) नच नित्योलोपः। शब्दान्तरप्राप्त्या तस्याप्यनित्यत्वात्। व्यक्तिभेदमाश्रेण च शब्दान्तरस्य ग्रहणात्।

( ३ ) लुङ्प्येवामनभिधानम्।

न्यनुमार्ष्टि अनुलोमयति । णाविष्ठवदिति टिलोपः । त्वचं गृह्णाति । त्वचयति । अच्प्रत्यान्तोऽयमकारान्तः । तेनाग्लोपित्वादुपधावृद्धि-र्न । हलन्तस्य तु तत्करोतीति णौ त्वाचयति । टिलोपस्तु न प्रकृत्यै-काजिति प्रकृतिवद्भावात् । वर्म्मणा सन्नह्यति सम्वर्म्मयति । वर्णं गृह्णाति वर्णयति । चूर्णैरवध्वंसयति अवचूर्णयति । अत्रावध्वंस-नमेव करणमितीन्दुश्रीभद्रौ ।

## ॥ अथान्येभ्योऽपि णिच् प्रदर्श्यते ॥

प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । प्रातिपदिकाद्धात्वर्थे णिच् तस्मिंश्चेष्ठनीव बहुलं कार्य्यम् । एनीमाचष्टे एतयति । दरदमाचष्टे दारदयति । पृथुं प्रथयति । वृद्धौ सत्यां पूर्वं वा टिलोपः । अपिप्रथत् । अपप्रथत् । मृदुं म्रदयति । अमिम्रदत् । अमम्रदत् । भृशं कृशं दृढ-म् । भ्रशयति । क्रशयति । द्रढयति । अबभ्रशत् । अचक्रशत् । अद-द्रढत् । परिवृढयति । पर्य्यवव्रढत् । ऊढिमाचष्टे औजिढत् । ढत्वा-दीनामसिद्धत्वाद्धातिशब्दस्य द्वित्वम् । पूर्वत्रासिद्धीयमद्वित्वे इति त्वनित्यमिति । ढि इत्यस्य द्वित्वमित्यन्ये । औडिढत् । ऊढमाख्य-त् । औजढत् । औडढत् । प्रकृत्यैकाच् । वृद्धिपुकौ । स्वापयति । त्वां मां वाऽऽचष्टे त्वापयति । मापयति । मपर्यन्तस्य त्वमौ[2] । पर-त्वात्पूर्वं नित्यत्वाट्टिलोपः । वृद्धिपुकौ । युवामावां वा युष्मयति । अस्मयति । श्वानमाचष्टे । शावयति । नस्तद्धित इति टिलोपः । प्रकृतिभावस्तु न । येननाप्राप्तिन्यायेन टेरित्यस्यैव बाधको हि सः । भत्वात्सम्प्रसारणम् । अन्ये तु । नस्तद्धित इति नेहातिदिश्यते ।

---

(१) वृद्धौ सत्यां टिलोपेनाग्लोपित्वात्सन्वद्भावे सति-सन्यत इतीत्वम् । वृद्धेः पूर्वं टिलोपे तु अपप्रथदिति ।

(२) प्रत्ययोत्तरपदयोश्चेत्यनेन ।

इष्ठनि तस्यादृष्टत्वात्। अश्विष्ठ इत्यादौ परत्वाट्टेरित्यस्यैव प्रवृत्तेः तेन शुनयतीति रूपमाहुः। श्वानयतीति केचित्। विद्वांसमाचष्टे विद्वयति। उदञ्चमाचष्टे उदीचयति। उदैचिचत्। प्रत्यञ्चम् प्रतीचयति। प्रत्यचिचत्। इकोऽसवर्णे इति प्रकृतिभावपक्षे। प्रतिअचिचत्। सम्यञ्चमाचष्टे समीचयति। सम्यचिचत्। समिअचिचत्। तिर्यञ्चमाचष्टे तिराययति। अञ्चेष्टिलोपेनापहारेऽपि बहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः। असिद्धवदत्रेति चिणोलुङ्न्यायेन प्रथमटिलोपोऽसिद्धः। अतःपुनष्टिलोपो न। अङ्गवृत्तपरिभाषया वा। चङ्यग्लोपित्वादुपधाह्रस्वो न। अतितिरायत्। सध्र्यञ्चमाचष्टे सध्राययति। अससध्रायत्। विष्वद्र्यञ्चम्। अविविष्वद्रायत्। देवद्र्यञ्चम्। देवद्राययति। अदिदेवद्रायत्। अदद्र्यञ्चम्। अददद्रायत्। अदमुयञ्चम्। अदमु आययति। अददमुआयत्। अमुमुयञ्चम्। अमुमुआययति। चङ्। आमुमुआययत्। भुवं भावयति। अबीभवत्।

---

( १ ) इष्ठवद्भावेन भत्वात्सम्प्रसारणम्। प्रकृत्यैकाजिति प्रकृतिभावः।

( २ ) अङ्गवृत्तपरिभाषया सम्प्रसारणं नेत्येके। सम्प्रसारणे वृद्धावावादेशे च विदावयतीत्यन्य। नित्यत्वाट्टिलोपात्प्राक् सम्प्रसारणम्। अन्तरङ्गत्वात्पूर्वरूपम्। टिलोपः विदयतीत्यपरे।

( ३ ) उपसर्गपृथक्कृत्याच्शब्दादेव णिजिति, प्रकृत्यैकाजितिप्रवृत्तेष्टिलोपो न। उदईत्-व्रतीत्वम्। अनिदितामिति क्विनिमित्तो नलोपः।

( ४ ) अचइत्यल्लोपे--चौ--इतिपूर्वस्यदीर्घः।

( ५ ) इह धात्वकारस्याचइतिलोपे चिशब्दात्प्रागटि पूर्वस्य यण्। नचालोपस्य सिद्धत्वादाट्स्यादितिवाच्यम्। व्यश्रयत्वात्। णिनिमित्तोहि लोपो लुङ्निमित्तश्चाट्।

( ६ ) यथाऽपाचितरामित्यत्रचिणः परस्य तशब्दस्य लुकि पुनस्तरप्रत्ययस्य लुङ् न भवति। प्रथमलुकोऽसिद्धत्वेन व्यवधानात्तथेत्यर्थः।

भुवम् अबुभवत् । श्रियम् अशिश्रयत् । गाम् अजूगवत् । रायम्-अरीरयत् । नावम् अनूनवत् । स्वश्वम् । स्वाशश्वत् । स्वः । अव्ययानांभमात्रे टिलोपः । स्वयति । असिस्वत् । बहून् भावयति । बहयतीत्यन्ये । विन्मतोरिति लुक् । स्रग्विणम् स्रजयति । संज्ञापूर्वकत्वान्न वृद्धिः । श्रीमतीं श्रीमन्तं वा श्रययति । अशिश्रयत् । पयस्विनीम् । पयसयति । इह टिलोपो न । तदपवादस्य लुकः प्रवृत्तत्वात् । स्थूलम्-स्थवयति । दूरम् दवयति । कथं तर्हि दूरयत्यवनते विवस्वतीति । दूरमततिअयतेवादूरात् । दूरातं कुर्वतीत्यर्थः । युवानम् यवयति । कनयति । युवाल्पयोरिति वा कन् । अन्तिकं नेदयति । बाढं साधयति । प्रशस्यं प्रशास्ययति । इह श्रज्यौ न । उपसर्गस्य पृथक्कृतेः । वृद्धं ज्यापयति । वर्षयति । प्रियं प्रापयति । स्थिरं स्थापयति । स्फिरं स्फापयति । उरुं वरयति । वारयति । बहुलं बंहयति । गुरुं गरयति । तृप्रं त्रापयति । दीर्घं द्राघयति । वृन्दारकं वृन्दयति ।

इति नामधातुप्रक्रिया ः

——+※+——



# अथ प्रत्ययमालाप्रक्रिया।

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ॥
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥ १ ॥ ( का० )

शैषिकात्। शालायां भवः शालीयो घटः। शालीये घटे भवमुदकमत्र पुनश्छो न। विरूपात्तु भवत्येव। यथा अहिच्छत्रे भवआहिच्छत्रः। आहिच्छत्रे भवः आहिच्छत्रीयो माणवकः। मतुबर्थीयात्। दण्डोऽस्यास्तीति दण्डिकः। दण्डिकोऽस्यास्तीति। अत्रमतुबर्थष्ठन्न। विरूपस्तुभवति। यथा। दण्डिमती सेना। सन्नन्तात्। चिकीर्षितुमिच्छति। जिहीर्षितुमिच्छति अत्र न। स्वार्थसन्नन्तात्तु भवति। यथा। जुगुप्सितुमिच्छति, जुगुप्सिषते। मीमांसिषते। कण्डूयतेः सन्। सन्यङोरितिप्रथमस्यैकाचो द्वित्वे प्राप्ते। ( कण्ड्वादेस्तृतीयस्येतिवाच्यम् ) कण्डूयियिषति। (वा नामधातूनां तृतीयस्य द्वे भवत इति वक्तव्यम् ) क्यजन्तात्सन्। आत्मनोऽश्वमिच्छति, अश्वीयति। अश्वीयितुमिच्छति अश्वीयियिषति। अशिश्वीयिषति। अपरआह (यथेष्टं वा नामधातूनाम्) आद्यानां त्रयाणामन्यतमस्य द्वित्वमित्यर्थः। अजादेस्त्वाद्येतरस्य। पुत्रीयितुमिच्छति। पुपुत्रीयिषति। पुतित्रीयिषति। पुत्रीयियिषति। अध्यापनयितुमिच्छति। अदिध्यापनीयिषति। अध्यापिपनीयिषति। अध्यापनिनीयिषति। अध्यापनीयियिषति। नदराणां संयुक्तानामचः परस्यैवद्वित्वनिषेधः। आत्मनइन्द्रमिच्छति, इन्द्रीयति, इन्द्रीयितुमिच्छति इन्दिद्रीयषति। इन्द्रीयियिषति। प्रियमाख्यातुमाचचाणं प्रयि-

तुं वेच्छति । पिप्रापयिषति । प्राथिपयिषति । प्रापयियिषति । उरूंवितुं वारयिषति । वारिरयिषति । वारयियिषति । बाढमाचष्टे साधयति साधयितुमिच्छति । सिसाधयिषति । सादिधयिषति । साधयियिषति । अतिशयेन पुनः पुनर्वा भवति बोभूयते । बोभूयितुमिच्छति, बोभूयिषते । बोभूयिषमाचष्टे, बोभूयिषयति । बोभूयिषयितुमिच्छति, बोभूयिषयिषति । गोमन्तमाचष्टे, गवयति । आत्मनो गवयमिच्छति, गवयीयति । गवयीयितुमिच्छति, गविवयीयिषति । पाचकीयितुमिच्छति, पिपाचकीयिषति । आख्यातमाचष्टे, आख्यातयति, आख्यातयितुमिच्छति, आचिख्यातयिषतीत्यादि ।

इति प्रत्ययमाला प्रक्रिया ॥





(१) णाविष्ठवद्भावेनप्रियशब्दस्य-प्रियस्थिर-इत्यादिना- प्रादेशस्ततो द्वित्वादि ।

(२) इष्ठवद्भावादिह-अन्तिकबाढयोरितिसाधादेशः ।

# * पं० विष्णुमित्रशर्मविरचितं *

## शोधनपत्रमेतत् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | ३ | १५ | ११५ |
| ६ | १४ | डित्व | ( २ ) डित्त्व |
| ६ | १६ | ३।७। | ७।३ |
| ७ | १७ | ई-स्ति | इ-स्ति |
| ८ | ९ | भाविषः।भाविषाः | भविषः।भविषाः |
| ९ | २ | ९६ | ८६ |
| ९ | १० | ९७ | ८७ |
| १० | ७ | ६ | १०० |
| ११ | १५ | ११ | ११० |
| १३ | १ | ६।४।७४ | ३।३।१३९ |
| १४ | १० | क्रप | क्रुत |
| १६ | ८ | पधिषेते | पधिषतै |
| १६ | १२ | पधिषेतें | पधिषैते |
| १७ | ३ | पधिषैथै | पधिषैथे |
| १७ | ३ | पधैथे | पधैथे |
| १९ | १६ | ६।४। | ६।१। |
| १९ | २० | भ्यालोप | भ्यासलोप |
| २३ | ३ | २१ | १२१ |
| २३ | ११ | ३१ | ६५ |
| २५ | २१ | ङौऽस्तो | ङौस्तो |
| ३२ | १३ | जभि | जभी |
| ३५ | २० | कामिषैत | कामिषतै |
| ३६ | ६ | पक्ति | पाक्ति |
| ३६ | १२ | ३।१। | ६।१। |
| ३६ | १६ | त्येतत्स्त | त्येतत्त |
| ३६ | १८ | स्तस्यो | स्तस्ये |
| ३७ | ५ | घिणाद | घिण्याद |
| ३७ | १९ | हम्य | ह्म्य |
| ३८ | ७ | १।३। | ३।१। |
| ३९ | ४ | ३७ | |
| ४१ | ११ | लृदितः | ऋदितः |
| ४१ | १५ | अभ्वलोत् | अभ्वल्लीत् |
| ४१ | १६ | घोऋ | घोऋ |
| ४४ | १ | ईक्षाञ्चक्रे | ईक्षाञ्चक्रे |
| ४५ | १ | अघाढाः | अगाढाः |
| ४६ | २१ | उषा. | ऊषा. |
| ४८ | २० | पाठा | पाठो |
| ४९ | ९ | १०८ | १०८ |
| ५० | ३ | अलुठत् | अलुटत् |
| ५० | ५ | अक्षुभत | अक्षुभत् |
| ५४ | २ | तोत्यदि | तोत्यादि |
| ७० | ६ | लोपः । | लोपः सृजति |
| ७० | १८ | चिच्युविषे | चुच्युविषे |
| ७२ | ६ | लट्च | लिट्च |
| ७४ | १८ | श्लराङ् | श्लेरङ् |
| ७४ | १८ | अह्वत | अह्वत । अह्वास्त |
| ७६ | ९ | आर्तीयिष्यत् | आर्तीयिष्यत |
| ७८ | ११ | ३६ | ४३ |
| ७९ | १९ | अलिह्यहि | ० |
| ८१ | ५ | पेढ्वम् | पेड्ढ्वम् |
| ८१ | २३ | रध्वे | रुध्वे |
| ८२ | ६ | । १ । | । ४ । |
| ८५ | १३ | प्रुवतै।प्रुवाते | प्रवते । प्रवाते |
| ३७ | १ | । १ । | । ४ । |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८६ | १५ | समीयात् | समियात् |
| ८८ | ३ | जन्मन। उपक्रमो, | जन्मनउपक्रमो |
| ८८ | २१ | इहन्नेति | इहनेति |
| ८९ | ४ | उचुः | ऊचुः |
| ८९ | १ | वेदतुः | विदतुः |
| ९० | २२ | द्विवचनाद् | द्विवचनादो |
| ९३ | ८ | जक्षतु-अलक्षत् | जक्षितु-अजक्षित् |
| ९३ | ८ | डित्सु | डित्सु |
| ९४ | १७ | तांसिचि | तंसिच |
| ९४ | १८ | ततोऽहला | ततोऽतोहला |
| ९४ | २० | नवतीति | नवेतीति |
| ९५ | २० | क्विदोक्षितातस्य | क्विदोक्षितस्या |
| ९५ | २२ | परन्तदो | परन्तद् |
| ९६ | ५ | आदीधीत् | अदीधीत |
| ९६ | ६ | अदीधिष्यत् | अदीधिष्यत |
| ९६ | ८ | सेसतु | सेसतुः |
| ९६ | २५ | अहोष्ट | अहोष्ट |
| ९९ | ५ | पिप्रियात् | पिपृयात् |
| १०० | १ | ।१। | ।४। |
| १०१ | १ | नेनेक्कु | नेनेकु |
| १०१ | १४ | वेवेक्कु | वेवेक्कु |
| १०१ | १८ | अवेट् | अवेवेट् |
| १०२ | १३ | अत्तासे | ० |
| १०३ | २ | अविभसुः | अविप्सुः |
| १०४ | ११ | त्रेगं | त्रेसु |
| १०५ | २ | दाभ्रास | दभ्राश |
| १०५ | ४ | त्रसुः | त्रेसुः |
| १०५ | १० | अक्षेरयत् | अक्षेप्स्यत् |
| १०५ | ११ | आद्री | आद्रे |
| १०५ | १२ | स्तोस्यतो | स्तोर्ष्यति |
| १०५ | १४ | इयेप | ० |
| १०५ | १३ | ऋतइद्धातो | ऋतइद्धातो |
| १०५ | २३ | न्यन्मते | मन्यन्ते |
| १०६ | ३ | स्तमभिम | स्तम्भिम |
| ६ | ३ | ऋदशो | ऋदृशो |
| १०६ | १ | सुषू | सुषु |
| १०६ | १७ | वुयुत्ता | वुयुटा |
| १०६ | ११ | मीनोति | मिनोति |
| १०६ | २२ | आदासि | अदासि |
| १०७ | २ | प्रणीदाते | प्रणिदाते |
| १०७ | ४ | मोड | मोड् |
| १०७ | ५ | प्राणा | प्राण |
| १०७ | ११ | लेस्यते | लेप्स्यते |
| १०७ | १३ | अलेष्यत् | अलेप्स्यत |
| १०८ | १ | तोटसको | तोटसकौ |
| १०८ | ४ | कर्माणि | कर्मणि |
| १०८ | १३ | जानिवध्यो | जनिवध्यो |
| १०८ | १६ | दीप्यतामः | ० |
| १०८ | २३ | तप्यते | तप्येत |
| १०९ | ८ | अमर्षीत् | अमर्षीत |
| १०९ | १५ | णाहादय | णहादय |
| ११० | ३ | युध्येत | बुध्येत |
| ११० | ४ | अवोध | अवोधि |
| ११० | ६ | वृत्तस्या | वृत्तस्य |
| ११० | ६ | पदरवञ्च | पदिरवञ्च |
| ११० | १० | युयुंजे | युयुजे |
| ११० | १३ | असुक्ष्यत | असृक्ष्यत |
| ११० | १६ | अकर्मका | अकर्मक |
| ११० | २० | राध्येत | राध्येत् |
| १११ | ४ | अतुषत | अतुषत् |
| १११ | ५ | अदुपत | अदुषत् |
| १११ | ७ | श्लिप्यत् | श्लिष्यात् |
| १११ | ९ | श्लिपश्वे | श्लिषश्लेः |
| १११ | १० | अश्लिपत | अश्लिषत् |
| १११ | ११ | अश्लेक्षत | अश्लेक्ष्यत् |
| १११ | १३ | अशकत। अशक्ष्यत | अशकत्। अशक्ष्यत् |
| १११ | १५ | सिस्वेद | सिष्वेद |
| १११ | २० | श्लेःक्स पषा | श्लेःक्स पुन |
| १११ | २२ | आलिङ्गन | आलिङ्गन |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| ११२ | १५ | ननश्च । ननश्म | नेश्च-नेश्म |
| ११२ | १७ | प्रणेश्यति | प्रणश्यति |
| ११२ | १८ | ३६ | ३५ |
| ११२ | १९ | नशोनस्य | नशेनस्य |
| ११३ | १२ | द्रहु | द्रुह |
| ११४ | १३ | मैदिता—मैदिष्यति | मादिता—मादिष्यति |
| ११४ | १५ | वक्ती । ति | वक्तीति |
| ११४ | १७ | आस्थत | आस्थत् |
| ११६ | १३ | समात्यर्थं | समाप्त्यर्थं |
| ११९ | १७ | हिंशोतिर्हस्य | हिनोतेर्हस्य |
| ११९ | १७ | जिघेथ | जिघयिथ । जिघेथ |
| १२० | ८ | आसात्सीत् | असात्सीत् |
| १२१ | १ | दम्मो | दम्भो |
| १२३ | २१ | स्यै | स्यैव |
| १२४ | ९ | गतान्दिय | गतान्द्रिय |
| १२४ | २१ | तृम्पति । तृप्यात् | तृप्यात् । तृम्पति |
| १२४ | २२ | दासानाम् | दासान्नाम |
| १२७ | २१ | निमञ्जन | निमज्जन |
| १२८ | ८ | द्रुभ्रुवेथ | दुभ्रुविथ |
| १२८ | ८ | ध्रुव्यात् | ध्रूव्यात् |
| १२९ | १० | लवने | ० |
| १२९ | २२ | आद्रियेत् | आद्रियेत |
| १३० | १० | अस्नाक्ष्यत् | अस्नक्ष्यत् |
| १३० | १३ | मज्यात् | मज्ज्यात् |
| १३० | १८ | स्पर्क्षाति | स्पर्क्ष्यति |
| १३१ | २२ | पिशधातु० (टिप्पणी) | १३२ पृष्ठस्था० |
| १३२ | ६ | खिदाति | खिन्दति |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३२ | ८ | अपिशत् | अपिंशत् |
| १३२ | ११ | अस्मिन्नेवेत्यादि (टि०) | १३१ पृष्ठस्था० |
| १३३ | २ | त । इरितश्च | तइरितश्च |
| १३४ | १० | इधाते । इधिरे । | ईधाते । ईधिरे |
| १३४ | ११ | इन्धै | इनधै |
| १३४ | १७ | शिंष्ट | शिंष्टः |
| १३४ | १८ | शिंष्यात | शिंष्यात् |
| १३५ | ८ | अतृणेढ् | अतृणेट् |
| १३५ | १३ | अङ्धि | अङ्ग्धि |
| १३५ | २० | वेजिषति । वेजिषाति । | विजिषति । विजिषाति । |
| १३६ | ८ | तनुयात | तनुयात् |
| १३९ | ७ | अजनिष्टेति | अजनिषतेति |
| १४३ | १९ | अभान्सीत् | अभान्त्सीत् |
| १४४ | ५ | वूर्षीष्ट | वृषीष्ट |
| १४४ | ५ | अवरिष्ट । | अवरिष्ट । अवृत |
| १४४ | २३ | क्षुभ्राति । क्षुभ्रीतः | क्षुभ्नाति । क्षुभ्नीतः । |
| १४९ | १ | अपवाद | अपवादः |
| १५३ | १४ | भूणयते | भ्रूणयते |
| १५९ | २० | ऽग्लिो | ऽग्लो |
| १६४ | २ | कण्डवा | कण्ड्वा |
| १६६ | ९ | ४५ | १५ |
| १६९ | २१ | देधि | दधि |
| १७० | २४ | दपसर्गा | दुपसर्गा |
| १७४ | १९ | वदना | वेदना |
| १७५ | १२ | स्न्यापेति । | सत्यापेति |
| १७७ | १६ | त्यन्य | त्यन्ये |
| १७७ | २१ | लोपास्य | लोपस्य |
| १७७ | २२ | व्यश्रयत्वात । | व्याश्रयत्वात् |

